दायिष्यसे दायिष्येथे दायिष्यध्वे
दायिष्ये दायिष्यावहे दायिष्यामहे
दास्यते दास्येते दास्यन्ते
दास्यसे दास्येथे दास्यध्वे
दास्ये दास्यावहे दास्यामहे
क्रि० अदायिष्यत अदायिष्येताम् अदायिष्यन्त
अदायिष्यथाः अदायिष्येथाम् अदायिष्यध्वम्
अदायिष्ये अदायिष्यावहि अदायिष्यामहि
अदास्यत अदास्येताम् अदास्यन्त
अदास्यथाः अदास्येथाम् अदास्यध्वम्
अदास्ये अदास्यावहि अदास्यामहि

धा

धीयते धीयेत धीयताम् अधीयत
अ० अधायि अधायिषाताम् अधायिषत
अधिषाताम् अधिषत
अधायिष्ठाः अधायिषाथाम् अधायिढ्वम्
ध्वम्-इढ्वम्
अधिथाः अधिषाथाम् अधिढ्वम्-इढ्वम्
अधायिषि अधायिष्वहि अधायिष्महि
अधिषि अधिष्वहि अधिष्महि
दधे । धायिषीष्ट । धासीष्ट । धायिता ।
धाता । धायिष्यते । धास्यते ।
अधायिष्यत । अधास्यत ।

ष्ठां

स्थीयते स्थीयेत स्थीयताम् अस्थीयत
अस्थायि तस्थे स्थायिषीष्ट स्थासीष्ट
स्थायिता स्थाता स्थायिष्यते स्थास्यते
अस्थायिष्यत अस्थास्यत

ग्लैं

ग्लायते ग्लायेत ग्लायताम् अग्लायत अग्लायि
जग्ले ग्लायिषीष्ट ग्लासीष्ट ग्लायिता ग्लाता
ग्लायिष्यते ग्लास्यते अग्लायिष्यत अग्लास्यत

शीङ्क्

शय्यते शय्येत शय्यताम् अशय्यत
अशायि शिश्ये शायिषीष्ट शयिषीष्ट
शायिता शयिता शायिष्यते शयिष्यते
अशायिष्यत अशयिष्यत

हनक्

हन्यते । हन्येत । हन्यताम् । अहन्यत
अ० अघानि अघानिषाताम् अघानिषत
अवधि अवधिषाताम् अवधिषत
अहसाताम् अहसत
अघानिष्ठाः अघानिषाथाम् अघानिध्वम् इढ्वम्
अवधिष्ठाः अवधिषाथाम् अवधिध्वम्इढ्वम्
अहसाथाम् अहढ्वम्-ध्वम्
अघानिषि अघानिष्वहि अघानिष्महि
अवधिषि अवधिष्वहि अवधिष्महि
अहस्वहि अहस्महि
जघ्ने । घानिषीष्ट । वधिषीष्ट ।
घानिता । हन्ता । घानिष्यते ।
हनिष्यते । अघानिष्यत । अहनिष्यत

ग्रहीश्

गृह्यते । गृह्येत । गृह्यताम् । अगृह्यत ।
अ० अग्राहि अग्राहिषाताम् अग्राहिषत
अग्रहीषाताम् अग्रहीषत
अग्राहिष्ठाः अग्राहिषाथाम् अग्राहिइढ्वम्
ध्वम्-ढ्वम्
अग्रहीष्ठाः अग्रहीषाथाम् अग्रहीढ्वम्
अग्राहिषि अग्राहिष्वहि अग्राहिष्महि
अग्रहीषि अग्रहीष्वहि अग्रहीष्महि
जगृहे । ग्राहिषीष्ट । ग्रहीषीष्ट ।
ग्राहिता । ग्रहीता । ग्राहिष्यते ।
ग्रहीष्यते । अग्राहिष्यत । अग्रहीष्यत ।

दृशृ

दृश्यते । दृश्येते । दृश्यताम् । अदृश्यत
अ० अदर्शि अदर्शिषाताम् अदर्शित
अदृक्षाताम् अदृक्षत
अदर्शिष्ठाः अदर्शिषाथाम्अदर्शिध्वम्-इढ्वम्
अदृक्षाथाम् अदृक्षध्वम्

अदर्शिषि अदर्शिष्वहि अदर्शिष्महि
अदृक्षि अदृक्ष्वहि अदृक्ष्महि

ददृशे । दर्शिषीष्ट । दृक्षीष्ट । दर्शिता । द्रष्टा । दर्शिष्यते । द्रक्ष्यते । अदर्शिष्यत । अद्रक्ष्यत ।

गॄ

| | | | |
|---|---|---|---|
| व० | गीर्यते | गीर्येते | गीर्यन्ते |
| | गीर्यसे | गीर्येथे | गीर्यध्वे |
| | गीर्ये | गीर्यावहे | गीर्यामहे |
| स० | गीर्येत | गीर्येयाताम् | गीर्येरन् |
| | गीर्येथाः | गीर्येयाथाम् | गीर्येध्वम् |
| | गीर्येय | गीर्येवहि | गीर्येमहि |
| प० | गीर्यताम् | गीर्येताम् | गीर्यन्ताम् |
| | गीर्यस्व | गीर्येथाम् | गीर्यध्वम् |
| | गीर्यै | गीर्यावहै | गीर्यामहै |
| ह्य० | अगीर्यत | अगीर्येताम् | अगीर्यन्त |
| | अगीर्यथाः | अगीर्येथाम् | अगीर्यध्वम् |
| | अगीर्ये | अगीर्यावहि | अगीर्यामहि |
| अ० | अगारि | अगारिषाताम् | अगारिषत |
| | | अगालिषाताम् | अगालिषत |
| | | अगरिषाताम् | अगरिषत |
| | | अगलिषाताम् | अगलिषत |
| | | अगरीषाताम् | अगरीषत |
| | | अगलीषाताम् | अगलीषत |
| | | अगीर्षाताम् | अगीर्षत |

अ० अगारिष्ठाः अगारिषाथाम् अगारिढ्वम्
ध्वम्-ड्ढ्वम्
अगालिष्ठाः अगालिषाथाम् अगालिढ्वम्
ध्वम्-ड्ढ्वम्
अगरिष्ठाः अगरिषाथाम् अगरिढ्वम्
ध्वम्-ड्ढ्वम्
अगलिष्ठाः अगलिषाथाम् अगलिढ्वम्
ध्वम्-ड्ढ्वम्
अगरीष्ठाः अगरीषाथाम् अगरीढ्वम्
ध्वम्-ड्ढ्वम्
अगलीष्ठाः अगलीषाथाम् अगलीढ्वम्
ध्वम्-ड्ढ्वम्
अगीर्ष्ठाः अगीर्षाथाम् अगीर्ढ्वम् ढ्वम्

अगारिषि अगारिष्वहि अगारिष्महि
अगालिषि अगालिष्वहि अगालिष्महि
अगरिषि अगरिष्वहि अगरिष्महि
अगलिषि अगलिष्वहि अगलिष्महि
अगरीषि अगरीष्वहि अगरीष्महि
अगलीषि अगलीष्वहि अगलीष्महि
अगीर्षि अगीर्ष्वहि अगीर्ष्महि

| | | | |
|---|---|---|---|
| प० | जगरे | जगराते | जगरिरे |
| | जगरिषे | जगराथे | जगरिढ्वे-ध्वे |
| | जगरे | जगरिवहे | जगरिमहे |
| | जगले | जगलाते | जगलिरे |
| | जगलिषे | जगलाथे | जगलिढ्वे-ध्वे |
| | जगले | जगलिवहे | जगलिमहे |

आ० गारिषीष्ट गारिषीयास्ताम् गारिषीरन्
गारिषीष्ठाः गारिषीयास्थाम् गारिषीढ्वम्-ध्वम्
गारिषीय गारिषीवहि गारिषीमहि
गीर्षीष्ट गीर्षीयास्ताम् गीर्षीरन्
गीर्षीष्ठाः गीर्षीयास्थाम् गीर्षीध्वम्
गीर्षीय गीर्षीवहि गीर्षीमहि
गालिषीष्ट गालिषीयास्ताम् गालिषीरन्
गालिषीष्ठाः गालिषीयास्थाम् गालिषीढ्वम्-ध्वम्
गालिषीय गालिषीवहि गालिषीमहि
गरिषीष्ट गरिषीयास्ताम् गरिषीरन्
गरिषीष्ठाः गरिषीयास्थाम् गरिषीढ्वम्-ध्वम्
गरिषीय गरिषीवहि गरिषीमहि
गलिषीष्ट गलिषीयास्ताम् गलिषीरन्
गलिषीष्ठाः गलिषीयास्थाम् गलिषीढ्वम्-ध्वम्
गलिषीय गलिषीवहि गलिषीमहि

श्व० गारिता गारितारौ गारितारः

गारितासे गारितासाथे गारिताध्वे
गारिताहे गारितास्वहे गारितास्महे
गालिता गालितारौ गालितारः
गालितासे गालितासाथे गालिताध्वे
गालिताहे गालितास्वहे गालितास्महे
गरिता गरितारौ गरितारः
गरितासे गरितासाथे गरिताध्वे
गरिताहे गरितास्वहे गरितास्महे
गलिता गलितारौ गलितारः
गलितासे गलितासाथे गलिताध्वे
गलिताहे गलितास्वहे गलितास्महे
गरीता गरीतारौ गरीतारः
गरीतासे गरीतासाथे गरीताध्वे
गरीताहे गरीतास्वहे गरीतास्महे
गलीता गलीतारौ गलीतारः
गलीतासे गलीतासाथे गलीताध्वे
गलीताहे गलीतास्वहे गलीतास्महे
भ० गारिष्यते गारिष्येते गारिष्यन्ते
गारिष्यसे गारिष्येथे गारिष्यध्वे
गारिष्ये गारिष्यावहे गारिष्यामहे
गालिष्यते गालिष्येते गालिष्यन्ते
गालिष्यसे गालिष्येथे गालिष्यध्वे
गालिष्ये गालिष्यावहे गालिष्यामहे
गरिष्यते गरिष्येते गरिष्यन्ते
गरिष्यसे गरिष्येथे गरिष्यध्वे
गरिष्ये गरिष्यावहे गरिष्यामहे
गलिष्यते गलिष्येते गलिष्यन्ते
गलिष्यसे गलिष्येथे गलिष्यध्वे
गलिष्ये गलिष्यावहे गलिष्यामहे
गरीष्यते गरीष्येते गरीष्यन्ते
गरीष्यसे गरीष्येथे गरीष्यध्वे
गरीष्ये गरीष्यावहे गरीष्यामहे
गलीष्यते गलीष्येते गलीष्यन्ते
गलीष्यसे गलीष्येथे गलीष्यध्वे
गलीष्ये गलीष्यावहे गलीष्यामहे

क्रि० अगारिष्यत अगारिष्येताम् अगारिष्यन्त
अगारिष्यथाः अगारिष्येथाम् अगारिष्यध्वम्
अगारिष्ये अगारिष्यावहि अगारिष्यामहि
अगालिष्यत अगालिष्येताम् अगालिष्यन्त
अगालिष्यथाः अगालिष्येथाम् अगालिष्यध्वम्
अगालिष्ये अगालिष्यावहि अगालिष्यामहि
अगरिष्यत अगरिष्येताम् अगरिष्यन्त
अगरिष्यथाः अगरिष्येथाम् अगरिष्यध्वम्
अगरिष्ये अगरिष्यावहि अगरिष्यामहि
अगलिष्यत अगलिष्येताम् अगलिष्यन्त
अगलिष्यथाः अगलिष्येथाम् अगलिष्यध्वम्
अगलिष्ये अगलिष्यावहि अगलिष्यामहि
अगरीष्यत अगरीष्येताम् अगरीष्यन्त
अगरीष्यथाः अगरीष्येथाम् अगरीष्यध्वम्
अगरीष्ये अगरीष्यावहि अगरीष्यामहि
अगलीष्यत अगलीष्येताम् अगलीष्यन्त
अगलीष्यथाः अगलीष्येथाम् अगलीष्यध्वम्
अगलीष्ये अगलीष्यावहि अगलीष्यामहि

तनूयि

तायते । तन्यते । तायेत । तन्येत ।
तायताम् । तन्यताम् । अतायत । अतन्यत
अ० अतानि अतनिषाताम् अतनिषत
अतनिष्ठाः अतथाः अतनिषाथाम्
अतनिड्ढ्वम् ध्वम्
अतनिषि अतनिष्वहि अतनिष्महि
तेने । तनिषीष्ट । तनिता । तनिष्यते ।
अतनिष्यत ।

णिगन्त घटि,

घट्यते । घट्येत । घट्यताम् । अघट्यत
अ० अघाटि अघटि अघाटिषाताम् अघाटिषत
अघटिषाताम् अघटिषत
अघटयिषाताम् अघटयिषत
अघाटि अघाटिषाथाम् अघाटिड्ढ्वम्-ध्वम्
अघटिष्ठाः अघटिषाथाम् अघटिड्ढ्वम्-ध्वम्
अघटयिष्ठाः अघटयिषाथाम् अघटयिड्ढ्वम्

ध्वम्—ढ्वम्
अघाटिषि अघाटिष्वहि अघाटिष्महि
अघटिषि अघटिष्वहि अघटिष्महि
अघटयिषि अघटयिष्वहि अघटयिष्महि
घटयाञ्चक्रे । घटयामास । घटयाम्बभूव ।
घाटिषीष्ट । घटिषीष्ट । घटयिषीष्ट ।
घाटिता । घटिता । घटयिता ।
घाटिष्यते । घटिष्यते । घटयिष्यते ।
अघाटिष्यत । अघटिष्यत । अघटयिष्यत

शम्

शम्यते । शम्येत । शम्यताम् । अशम्यत
अशमि । अशमिष्ठाः । अशमिषि ।
शेमे । शमिषीष्ट । शमिता । शमिष्यते
। अशमिष्यत ।

णिचि

शम्यते । शम्येत । शम्यताम् । अशम्यत
अशामि अशमि अशामिषाताम् अशामिषत
अशमिषाताम् । अशमिषत
अशमयिषाताम् । अशमयिषत
अशामिष्ठाः अशामिषाथाम् अशामि-
ढ्वम्-ध्वम्
अशमिष्ठाः अशमिषाथाम् अशमि—
ढ्वम्-ध्वम्
अशमयिष्ठाः अशमयिषाथाम अशमयि-
ढ्वम-ढ्वम-ध्वम
अशामिषि अशामिष्वहि अशामिष्महि
अशमिषि अशमिष्वहि अशमिष्महि
अशमयिषि अशमयिष्वहि अशमयिष्महि
शमयामासे । शामिषीष्ट । शमिषीष्ट
शमयिषीष्ट । शामिता । शमिता ।
शमयिता । शामिष्यते । शमिष्यते ।
शमयिष्यते । अशामिष्यत । अशमिष्यत
अशमयिष्यत ।

यङन्ताद्–यङ्लुगन्ताच्च णिचि
शंशम्यते । शंशम्येत । शंशम्यताम् ।
अशंशम्यत ।
अशंशामि अशंशमि अशंशामिषाताम्
अशंशामिषत
अशंशमिषाताम् अशंशमिषत
अशंशमयिषाताम् अशंशमयिषत
अशंशामिष्ठाः अशंशामिषथाम् अशंशामि-
ढ्वम्-ध्वम्
अशंशमिष्ठाः अशंशमिषाथाम् अशंशमि-
ढ्वम्-ध्वम्
अशंशमयिष्ठाः अशंशमयिषाथाम् अशंशमयि-
ढ्वम्-ढ्वम्-ध्वम्
अशंशामिषि अशंशामिष्वहि अशंशामिष्महि
अशंशमिषि अशंशमिष्वहि अशंशमिष्महि
अशंशमयिषि अशंशमयिष्वहि अशंशमयिष्महि
शंशमयाञ्चक्रे । शंशमयिषीष्ट ।
शंशामिषीष्ट । शंशमिषीष्ट ।
। शंशामिता । शंशमिता ।
शंशमयिता । शंशामिष्यते । शंशमिष्यते
शंशमयिष्यते । अशंशामिष्यत ।
अशंशमिष्यत । अशंशमयिष्यत ।
भष्यमतेतु दीर्घो नास्तीति विशेषः

गम्लृ

गम्यते । गम्येत । गम्यताम् । अगम्यत
अ० अगामि अगंसाताम अगंसत
अगंस्थाः अगंसाथाम् अगंध्वम्-ढ्ध्वम्
अगंसि अगंस्वहि अगंस्महि
प० जग्मे जग्माते जग्मिरे
जग्मिषे जग्माथे जग्मिध्वे
जग्मे जग्मिवहे जग्मिमहे
आ० गंसीष्ट । गन्ता । गंस्यते । अगंस्यत ।

यम

यम्यते । यम्येत । यम्यताम् । अयम्यत
अयामि अयंसाताम अयंसत
अयंस्थाः अयंसाथाम् अयंध्वम्-ढ्ध्वम्
अयंसि अयंस्वहि अयंस्महि
येमे । यंसीष्ट । यन्ता । यंस्यते ।
अयंस्यत ।

रमि

रम्यते रम्येत रम्यताम् अरम्यत अरामि अरंस्थाः । अरंसि रेमे रंसीष्ट रन्ता रंस्यते अरंस्यत

नम

नम्यते । नम्येत । नम्यताम् । अनम्यत अनामि । अनंस्थाः । अनंसि । नेमे । नंसीष्ट । नंसीयास्ताम् नंसीरन् नन्ता नंस्यते । अनंस्यत ।

कम

काम्यते । कम्यते । काम्येत । कम्येत काम्यताम् । कम्यताम् । अकाम्यत । अकम्यत ।

अ० अकामि अकामिषाताम् अकामिषत
अकमिषाताम् अकमिषत
अकामयिषाताम् अकामयिषत
अकमिष्ठाः अकमिषाथाम् अकमिड्ढ्वम् ध्वम्
अकामिष्ठाः अकामिषाथाम् अकामिड्ढ्वम् ध्वम्
अकामयिष्ठाः अकामयिषाथाम् अकामयि-ड्ढ्वम्-ढ्वम् ध्वम्
अकमिषि अकमिष्वहि अकमिष्महि
अकामिषि अकामिष्वहि अकामिष्महि
अकामयिषि अकामयिष्वहि अकामयिष्महि

चकमे । कामयामासे । कमिषीष्ट । कामिषीष्ट । कामयिषीष्ट । कमिता । कामिता । कामयिता । कमिष्यते । कामिष्यते । कामयिष्यते । अकमिष्यत अकामिष्यत । अकामयिष्यत ।

वम

वम्यते । वम्येत । वम्यताम् । अवम्यत
अ० अवामि अवमिषाताम् अवमिषत
अवमिष्ठाः अवमिषाथाम् अवमिड्ढ्वम्-ध्वम्
अवमिषि अवमिष्वहि अवमिष्महि
ववमे । वमिषीष्ट । वमिता । वमिष्यते । अवमिष्यत ।

आचम

आचम्यते । आचम्येत । आचम्यताम् । आचम्यत ।

अ० आचामि आचमिषाताम् आचमिषत
आचमिष्ठाः आचमिषाथाम् आचमिड्-ढ्वम्-ध्वम्
आचमिषि आचमिष्वहि आचमिष्महि
आचेमे । आचमिषीष्ट । आचमिता । आचमिष्यते । आचमिष्यत ।

विश्रम

विश्रम्यते विश्रम्येत विश्रम्यताम् व्यश्रम्यत व्यश्रामि मतान्तरे व्यश्रमीति रूकमेव व्यश्रमि शश्रमे श्रमिषीष्ट श्रमिता श्रमिष्यते अश्रमिष्यत

भञ्ज

भज्यते । भज्येत । भज्यताम् । अभज्यत
अ० अभञ्जि अभाजि अभङ्क्षाताम् अभङ्क्षत
अभङ्क्थाः अभङ्क्षाथाम् अभङ्ग्-ढ्वम्-ग्ध्वम्
अभङ्क्षि अभङ्क्ष्वहि अभङ्क्ष्महि
बभञ्जे । भङ्क्षीष्ट । भङ्क्ता । भङ्क्ष्यते । अभङ्क्ष्यत ।

लभ

| | | | |
|---|---|---|---|
| व० | लभ्यते | लभ्येते | लभ्यन्ते |
| | लभ्यसे | लभ्येथे | लभ्यध्वे |
| | लभ्ये | लभ्यावहे | लभ्यामहे |
| स० | लभ्येत | लभ्येयाताम् | लभ्येरन् |
| | लभ्येथाः | लभ्येयाथाम् | लभ्येध्वम् |
| | लभ्येय | लभ्येवहि | लभ्येमहि |
| प० | लभ्यताम् | लभ्येताम् | लभ्यन्ताम् |
| | लभ्यस्व | लभ्येथाम् | लभ्यध्वम् |
| | लभ्यै | लभ्यावहै | लभ्यामहै |
| ह्य० | अलभ्यत | अलभ्येताम् | अलभ्यन्त |
| | अलभ्यथाः | अलभ्येथाम् | अलभ्यध्वम् |

| | | | |
|---|---|---|---|
| | अलभ्ये | अलभ्यावहि | अलभ्यामहि |
| अ० | अलाभि अलम्भि | अलप्साताम् | अलप्सत |
| | अलब्धाः | अलप्साथाम् | अलब्ध्वम् अलब्द्ध्वम् |
| | अलप्सि | अलप्स्वहि | अलप्स्महि |
| अ० | लेभे | लेभाते | लेभिरे |
| | लेभिषे | लेभाथे | लेभिध्वे |
| | लेभे | लेभिवहे | लेभिमहे |
| आ० | लप्सीष्ट | लप्सीयास्ताम् | लप्सीरन् |
| | लप्सीष्ठाः | लप्सीयास्थाम् | लप्सीध्वम् |
| | लप्सीय | लप्सीवहि | लप्सीमहि |
| श्व० | लब्धा | लब्धारौ | लब्धारः |
| | लब्धासे | लब्धासाथे | लब्धाध्वे |
| | लब्धाहे | लब्धास्वहे | लब्धास्महे |
| भ० | लप्स्यते | लप्स्येते | लप्स्यन्ते |
| | लप्स्यसे | लप्स्येथे | लप्स्यध्वे |
| | लप्स्ये | लप्स्यावहे | लप्स्यामहे |
| क्रि० | अलप्स्यत | अलप्स्येताम् | अलप्स्यन्त |
| | अलप्स्यथाः | अलप्स्येथाम् | अलप्स्यध्वम् |
| | अलप्स्ये | अलप्स्यावहि | अलप्स्यामहि |

ष्टा—स्थीयते अस्थायि
शुच—शुच्यते अशोचि
वाछु—वाञ्छ्यते अवाञ्छि
त्यजं—त्यज्यते अत्याजि
षञ्जं—सज्यते असञ्जि
क्रीड्—क्रीड्यते अक्रीडि
चुबु—चुम्ब्यते अचुम्बि
ष्मिङ्—स्मीयते अस्मायि
त्रैङ्—त्रायते अत्रायि
टुवेपृङ्—वेप्यते अवेपि
गाहौङ्—गाह्यते अगाहि
दीक्षि—दीक्ष्यते अदीक्षि
राजृग्—राज्यते अराजि

स्रंसूङ्—स्रस्यते अस्रंसि
षद्लृं—सद्यते असादि
वेंग्—ऊयते अवायि
वद—उद्यते अवादि
वहीं—उह्यते अवाहि
अदं—अद्यते अघासि
भांक्—भायते अभायि
इंक्—अधीयते अध्यगायि
टुक्षु—क्षूयते अक्षावि
रुदृंक्—रुद्यते अरोदि
ञिष्वपंक्—सुप्यते अस्वापि
श्वसक्—श्वस्यते अश्वासि
दरिद्राक्—दरिद्र्यते अदरिद्रि
अदरिद्रायि
जागृक्—जागर्यते अजागारि
चकासृक्—चकास्यते अचकासि
शासूक्—शिष्यते अशासि
मृजौक्—मृज्यते अमार्जि
विदक्—विद्यते अवेदि
दुहींक्—दुह्यते अदोहि
ओहांक्—हीयते अहायि
हांक्—हीयते अहायि
णिजूंकी—निज्यते अनेजि
दिवूच्—दीव्यते अदेवि
नृतैच्—नृत्यते अनर्ति
त्रसैच्—त्रस्यते अत्रासि
क्रुधंच्—क्रुध्यते अक्रोधि
नशौच्—नश्यते अनाशि
मुहौच्—मुह्यते अमोहि
दूङ्च्—दूयते अदावि
दीङ्च्—दीयते अदायि
प्रीङ्च्—प्रीयते अप्रायि
युधिंच्—युध्यते अयोधि
षुगृट्—सूयते असावि

| | |
|---|---|
| हिंट्—हीयते | अहायि |
| आप्लृंट्—आप्यते | आपि |
| तुदींत्—तुद्यते | अतोदि |
| मुच्लृंत्—मुच्यते | अमोचि |
| ओव्रश्चौत्—वृश्च्यते | अव्रश्चि |
| प्रछंत्—पृच्छ्यते | अप्रच्छि |
| टुमस्जोंत्—मज्ज्यते | अमज्जि |
| कुटत्—कुट्यते | अकोटि |
| रुधूंपी—रुध्यते | अरोधि |
| युजूंपी—युज्यते | अयोजि |
| पिष्लृंप्—पिष्यते | अपेषि |
| इन्धैपि—इध्यते | ऐन्धि |
| षणूयी—सायते-सन्यते | असानि |
| मनूयि—मन्यते | अमानि |
| डुक्रींग्श्—क्रीयते | अक्रायि |
| ज्यांश्—जीयते | अज्यायि |
| बन्धंश्—बध्यते | अबन्धि |
| क्षुभश्—क्षुभ्यते | अक्षोभि |
| अशश्—अश्यते | आशि |
| चुरण्—चोर्यते | अचोरि |
| भक्षण्—भक्ष्यते | अभक्षि |
| महण्—मह्यते | अमहि |
| स्पृहण्—स्पृह्यते | अस्पृहि |
| मार्गण्—मार्ग्यते | अमार्गि |
| ईरण्—ईर्यते | ऐरि |
| कण्डूग्—कण्डूय्यते | अकण्डूयि |

इतिश्री तपोगच्छाधिराजसकलस्वपरसमयपारावारपारीण तीर्थसंर-
क्षणप्रवणविद्यापीठादिप्रस्थानपञ्चकसमाराधकसंविग्नशाखीयभट्टा-
रकाचार्यवर्य श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारान्तेवासिन्या-
यवाचस्पतिशास्त्रविशारदाचार्य श्रीविजयदर्शनसूरिशिष्य-
मुनिगुणविजयविरचितायां हैमधातुमालायां

## ॥ भावकर्मप्रक्रिया ॥

# उपसर्गवृत्ति—

नाम

## प्राद्युपसर्गार्थोदाहरणसंग्रहः

प्रपरापसमन्ववनिर्दुरभि—व्यधिसूदतिनिप्रतिपर्यपयः ।
उप आङिति विंशति(१)रेष सखे, उपसर्गगणः कथितः कविना ॥१॥

प्र आदिकर्मोदीर्णभृशैश्वर्यसंभववियोगनियोगतृप्तिशुद्धीच्छाशक्तिशान्तिपूजाग्रदर्शनेषु । प्र इत्ययमुपसर्ग एतेष्वर्थेषु वर्तते । आदिकर्मणि प्रयातः । उदीर्णे प्रवरो राजा । प्रबला मूषिका वा । भृशार्थे प्रवदन्ति शब्दान् । ऐश्वर्ये प्रभुर्देवदत्तस्य । सम्भवे हिमवतो गङ्गा प्रभवति । वियोगे प्रोषितः । नियोगे प्रयुक्तः । तृप्तौ प्रभुक्तमन्नम् । शुद्धौ प्रसन्नमुदकम् । इच्छायां प्रार्थयेत् कन्याम् । शक्तौ प्रचण्डो राजा । प्रशक्तो विद्यायां वा । शान्तौ प्रशान्तोऽग्निः । पूजायां प्राञ्जलिः स्थितः । अग्रे प्रवालो वृक्षस्य । दर्शने प्रविलोकयति ॥ १ ॥

परा वध्यमर्पणगतिविक्रमाभिमुख्यभृशार्थाप्राधान्यविमोक्षविक्षेपप्रातिलोम्येषु । परा इत्ययमुपसर्ग एतेष्वेकादशस्वर्थेषु वर्तते । वध्ये पराघातं । मर्षणे परामृष्टः । गतौ परागतः । विक्रमे पराक्रान्तः । आभिमुख्ये परावृत्तः । भृशार्थे पराजितः । अप्राधान्ये पराधीनः । विमोक्षे पराहतः ।[२]प्रातिलोम्ये पराङ्मुखः ॥२॥

अप वर्जनवियोगचौर्यहर्षनिर्देशविक्रियावारणविपर्ययेषु । एतेष्वष्टस्वर्थेषु वर्तते । वर्ज्जने अपगता वृतिः । वियोगे अपयाति । चौर्ये अपहरति । हर्षे अपहसति । निर्देशे अपदिशति । विक्रियायां अपकृतम् । वारणे अपसरति पापात् । विपर्यये अपवादः ॥ ३ ॥

सम् संयोगैक्यविप्रयोगप्रभवसत्यसमक्षसमन्ततोभावप्रेक्षणविभूषणाभिमुख्यश्लेषकार्यसिद्धिक्रोधस्वीकरणेषु । सम् एतेषु पञ्चदशस्वर्थेषु वर्तते । संयोगे संयुतः पुत्रेण । ऐक्ये संप्रवदन्ति मुख्याः । विप्रयोगे वियुक्तः प्रियेण । प्रभवे सम्भवत्यग्निः काष्ठेषु । सत्ये संमतः । (३) समंततोभावे सङ्कीर्णम् । प्रेक्षणे समीक्षितः । विभूषणे संस्कृता कन्या । आभिमुख्ये संमुखाः । श्लेषे संघातः । कार्यसंसिद्धौ संसिद्धिः । क्रोधे संक्रुद्धः । स्वीकरणे संगृह्णाति ॥ ४ ॥

---

(१) प्र, परा, अप, सम्, अनु, अव, निर्, दुर्, अभि, वि अधि, सु, उत्, अति, नि, प्रति, परि, अपि, उप, आङ्, इति विंशतिः ॥

(२ अत्र विक्षेपोदाहरणं पुस्तके नास्ति

(३) संख्या वर्तते इत्यत्राधिकः पाठः पुस्तके दृश्यते ।

(२) अनुज्ञातो गच्छति इत्यत्राधिकः पाठः पुस्तके दृश्यते ।

अनु पश्चाद्भावाधिष्ठानसामीप्यस्वाध्यायानुबन्धविसर्गसादृश्याभिमुख्यलक्षणहीनेषु। अनु इत्ययमुपसर्ग एतेषु नवस्वर्थेषु वर्तते। पश्चाद्भावेऽनुरथम्। अधिष्ठाने अनुशोणं पाटलिपुत्रम्। सामीप्ये अनुवचनं गमनम्(२)। स्वाध्याये अनुवाक्यमधीते। अनुबन्धे अनुशयः। विसर्गे अनुगच्छति। सादृश्ये अनुकृतिः। आभिमुख्ये अनुमातरं धावति। लक्षणे अनुगमनं निर्गतिः। हीने अनुवाह्लीकं मगधाः॥५॥

अव विज्ञानावलम्बनशुद्धीषदर्थव्याप्तिपरिभववियोगेषु। अव इत्ययमुपसर्ग एतेषु सप्तस्वर्थेषु वर्तते। विज्ञाने अवगतोऽर्थः। अवलम्बने अवष्टभ्य यष्टिं गच्छति। शुद्धौ अवदातं मुखम्। ईषदर्थे अवलम्बते। व्याप्तौ अवकीर्णं पांशुभिः। परिभवे अवहसति। वियोगे अवमुक्तः कान्तया॥ ६॥

निर् वियोगभृशार्थपापात्ययावधारणादेशातिक्रमलाभेषु। निर् इत्ययमुपसर्ग एतेष्वर्थेषु। वियोगे निःशल्यम्। भृशार्थे निर्णीतम्। पापे निर्मर्यादम्। अत्यये निर्मेघं गगनम्। अवधारणे निश्चितम्। आदेशे निर्दिष्टः। अतिक्रमे निष्क्रान्तः। लाभे निर्दिशति दातारम्॥ ७॥

दुर् ईषदर्थकुत्सनवैवर्ण्यासंपत्त्यलाभेषु। दुर् इत्ययमुपसर्गः पञ्चस्वर्थेषु वर्तते। (१) वैवर्ण्ये दुश्चर्मा दुर्गतः। अलाभे असम्पत्तौ च दुष्प्रापम्॥ ८॥

अभि पुजाभिमुख्यभृशार्थसादृश्यप्रयोगेच्छाव्याधिनृत्तसौरूप्यवचनादनाम्नायेषु। अभि एतेषु दशस्वर्थेषु वर्तते। पूजायां अभिवादयति गुरून्। आभिमुख्ये अभिमुखं स्थितः। भृशार्थे अभिरतः। सादृश्ये अभिजातः। प्रयोगे अभिजानाति। इच्छायामभिलषति। व्याधौ अभ्यमितः। नृत्ते अभिनयः। सौरूप्ये अभिरूपः। वचने अभिवदति। अदने अभ्यवहरति। आम्नाये अभ्यस्यति॥ ९॥

वि नानार्थवियोगातिशयभयदूरार्थभृशार्थकलहैश्वर्यमोहनपैशून्योत्कर्षकुत्सनेषदर्थानाभिमुख्यानवस्थानाप्राधान्यदर्शनशौर्येषु। वि इत्ययमुपसर्ग एतेष्वष्टादशस्वर्थेषु वर्तते। नानार्थे विचित्रा सूत्रस्य गतिः पाणिनेः। वियोगे वियुक्तः। अतिशये विशेषा विद्या। भये विषण्णम्। दूरार्थे विकृष्टोऽध्वा। भृशार्थे विशुद्धा नद्यः। कलहे विभज्य धनम्। ऐश्वर्ये विभुर्देवदत्तः। मोहने विमनस्कः। पैशून्ये अधिकं विशीर्णयति। उत्कर्षे विस्मृतो देवदत्तः। कुत्सने विरूपः। ईषदर्थे विलोभितः अनाभिमुख्ये विमुखः। अनवस्थाने विभ्रान्तः। अप्राधान्ये विनष्टः। दर्शने विलोभनीया कन्या। शौर्ये विक्रान्तः॥ १०॥

---

(१) ईषदर्थकुत्सनयोरुदाहरणं पुस्तके न दृश्यते।

अधि वशीकरणाधिष्ठानाध्यापनैश्वर्यस्मरणाधिक्येषु । अधि इत्ययमुपसर्ग एतेषु षट्स्वर्थेषु वर्तते । वशीकरणे अधिकरोति रथी रथम् । अधिष्ठाने अधिगणः । अध्यापने अधीतगणः । ऐश्वर्ये अधिपतिः । स्मरणे मन्त्रमधिस्मरति । आधिक्ये अधिकृतो राजा बलेन ॥ ११ ॥

सु प्रशंसापूजाभृशार्थानुमतिसमृद्धिकृच्छ्रेषु । सु इत्ययमुपसर्ग एतेषु षट्स्वर्थेषु वर्तते । प्रशंसायां सुरूपो देवदत्तः । पूजायां सुब्राह्मणः । भृशार्थे सुतप्ता आपः । अनुमतौ सुकृतम् । समृद्धौ सुसमृद्धाः मगधाः । कृच्छ्रे सुदुष्करम् ॥१२॥

उत् प्राबल्यवियोगलाभोर्ध्वकर्मप्रकाशोत्स्वास्थ्यमोक्षाभावबन्धनप्राधान्यशक्तिषु । उत् इत्ययमुपसर्ग एतेष्वेकादशस्वर्थेषु वर्तते । प्राबल्ये उद्धतः सर्पः । वियोगे उत्पथेन गच्छति । लाभे उत्पन्नं द्रव्यम् । उर्ध्वकर्मणि शयनादुत्तिष्ठति । प्रकाशे उच्चरति । उत्स्वास्थ्ये उत्सुकः । मोक्षे उन्मुञ्चति । अभावे उत्पथः । बन्धने उद्बद्धा कन्या । प्राधान्ये उत्कृष्टः । शक्तौ उत्साहः ॥ १३ ॥

अति अतिशयभृशार्थविक्रान्त्यतिक्रमणवृद्धिषु । अति इत्ययमुपसर्ग एतेषु पञ्चस्वर्थेषु वर्तते । अतिशये मानुष्यमस्यातिज्ञानम् । भृशार्थे अतितप्ता आपः । विक्रान्ते अतिरथम् । अतिक्रमणे हस्तिनातिक्रामति । वृद्धौ अतिमेघं गगनम्॥१४॥

नि निवेशराशिभृशार्थाधोभावविन्यासद्वारकर्मश्रवणोपरमबन्धनकौशल्यान्तर्भावसामीप्यमोक्षाश्रयेषु । नि इत्यमुपसर्ग एतेषु चतुर्दशस्वर्थेषु वर्तते । (१) राशौ निकरोति धान्यस्य । भृशार्थे निगृहीतः । अधोभावे निपतितः । विन्यासे निवसते नगरम् । द्वारकर्मणि निविष्टो वर्द्धिकः । श्रवणे निशामयति । उपरमे निवृत्तः । बंधने नियमितः । कौशल्ये निपुणः । अन्तर्भावे निपीतमुदकं सिकतादिभिः । सामीप्ये निकृष्टः । मोक्षे निविष्टः । आश्रये निलयः ॥ १५ ॥

प्रति सादृश्यादानहिंसातद्योगविनियमप्रतिनिधिनिवृत्तिव्याध्याभिमुख्यव्याप्तिधारणेषु । प्रति एकादशस्वर्थेषु वर्तते । सादृश्ये प्रतिकृतं देवदत्तेन । आदाने प्रतिगृह्णाति । हिंसायां प्रतिहतः । तद्योगे प्रतिपन्नमनेन । विनिमये तैलेन घृतं प्रतिगृह्णाति प्रतिनिधौ प्रतिहस्ती । निवृत्तौ प्रतिक्रान्तः । व्याधौ प्रत्यामयः । आभिमुख्ये प्रतिसर्यम् । व्याप्तौ प्रतिकीर्णं पांशुभिः । धारणे प्रतिनिवृत्तः ॥ १६ ॥

परि समंततोभावव्याप्तिदोपाख्यानोपरमभूषणपूजावर्जनालिङ्गननिवसनव्याप्तिशोकवीप्सासु । परि एतेषु द्वादशस्वर्थेषु वर्तते । समन्ततोभावे परिमूढमतिः । व्याप्तौ परिमतोसिना(२)ग्रामः । दोपाख्याने परिभवति देवदत्तः । उपरमे

---

(१) निवेशस्योदाहरणं पुस्तके नास्ति । (२) असिना खड्गेन ।

परिपूर्णो घटः । भूषणे परिकरोति कन्याम् । पूजायां परिचारयति गुरून् । वर्जने परित्रिगर्तेभ्यो वृष्टो देवः । आलिङ्गने परिष्वजते कन्याम् । निवसने परिदधाति । व्याप्तौ परिवाहिकः । शोके परिदीव्यति । वीप्सायां वृक्षं वृक्षं परिसिञ्चति ॥१७॥

अपि संभावनानुवृत्त्यपेक्षासमुच्चयगर्हाशीरामर्शप्रश्नेषु । अपि इत्ययमुपसर्ग एतेष्वष्टस्वर्थेषु वर्त्तते । सम्भावने अपि सिञ्चेन्मूलसहस्रम् । अनुवृत्तौ अपि स दद्यात् । अपेक्षायां अप्यर्थाय विद्वानागच्छति । समुच्चये अपि सिञ्च अपि स्तुहि । गर्हायां अपि स्त्रियो वृषलाः । आशिषि अपि जीव्याद्वर्षशतम् । आमर्शे अपि श्वस्तनमेतत् । प्रश्ने अपि गच्छति ॥ १८ ॥

उप सामीप्यसामर्थ्यव्याप्त्याचार्यकरणदोषाख्यानदानदाक्षिण्यवीप्सारम्भपूजातद्योगाध्ययनमरणानशनेषु । उप एतेषु चतुर्दशस्वर्थेषु वर्तते । सामीप्ये उपकुम्भं तिष्ठति । सामर्थ्ये उपकरोति देवदत्तः । व्याप्तौ उपकीर्णः पांशुभिः । आचार्यकरणे उपदिशति शिष्यस्य । दोषाख्याने उपघातः । दाने उपहरत्यर्थं देवदत्तस्य । दाक्षिण्ये उपचारः । वीप्सायाम् उपकूलम् (१) पूजायां उपासितः । तद्योगे उपपन्नं वाक्यम् । अध्ययने उपाध्यायादधीते । मरणे उपरतो देवदत्तः । अनशन उपवासो देवदत्तस्य ॥ १९ ॥

आङ् प्राप्तीच्छाबंधनभयवाक्याश्लेषाभिविधिसाध्यकृच्छ्रादिकर्मग्रहणानिलयसामीप्यविक्रियानिमन्त्रणनिवृत्त्याशीरादानान्तर्भावस्पर्द्धाभिमुख्योर्ध्वकर्मविस्मयप्रतिष्ठानिर्देशशक्तिमर्यादासु । आङ् इत्ययमुपसर्ग एतेषु सप्तविंशत्यर्थेषु वर्तते । प्राप्तौ आसादितमनेन । इच्छायां आकाङ्क्षते । बन्धने आमुञ्चति कवचम् । भये आकम्पितः । वाक्ये आज्ञापयति । श्लेषे आलिङ्गयति । अभिविधौ आकुमारं यशः पाणिनेः । साध्ये आनयति कपटेन । कृच्छ्रे अपगतः । आदिकर्मणि आरभते कटम् । ग्रहणे आलम्बते । निलये आवसथः । सामीप्ये आसन्नम् । विक्रियायां आछत्रम् । निमन्त्रणे आमन्त्रितो देवदत्तः । निवृत्तौ आरमते । आशिषि आशास्ते कन्याम् । आदाने आदत्ते रसायनम् । अन्तर्भावे आपीतमुदकं सिकतादिभिः । स्पर्द्धायां आह्वयते । आभिमुख्ये आगच्छति । उर्ध्वकर्मणि आरोहति हस्तिनम् । विस्मये आनन्दितः प्रतिष्ठायां आस्पदम् । निर्देशे आदिशति । शक्तौ आभाति गगने चन्द्रमाः । मर्यादायां आवर्द्धमाना निष्पन्नाः शालयः ॥ २० ॥

## ॥ इत्युपसर्गवृत्तिः समाप्ता ॥

---

(१) आरम्भस्योदाहरणं पुस्तके नास्ति ।

# उपसर्गवर्गः ॥

सरस्वती शब्दजलप्रवाहा नानार्थवीचीरुचिरा विभाति ।
निष्णातचेताः* कविकर्मदक्षो यस्यां† भवेन्मन्दमतिर्नरोऽपि ॥ १ ॥
एकेन युग्मेन कृशानुभिर्वा‡ स्वार्थं परित्यज्य परार्थभाजः ।
शब्दा इति स्युर्विशदार्थबोधा विधीयतेऽसावुपसर्गवर्गः ॥ २ ॥

स्वतोऽर्थः सृज्यतेऽपूर्वः स हि येनोपसर्गकः ।
केवलं धारणार्थस्य धातोरर्थाः पृथग्यथा ॥ ३ ॥

डुधाञ् धारणपोषणयोः

उपधानं तूपबर्हे समाधानं मनःस्थितौ, । सन्धानमुभयोर्योग आसवादिकृतावपि, ४
अपिधानं पिधानं च द्वयमाच्छादने स्मृतम्, ।

प्रधानं प्रकृतौ मन्त्रिश्रेष्ठयो,. अथ नामनि ॥ ५ ।
अभिधान, मथोवस्त्रे परिधानं, विधानकम् ।
कृत्ये, सद्वस्तुसम्पूर्णे निधानं वस्तुनि स्मृतम्, ॥ ६ ॥
आधानं स्थापने वाच्यं, धारणार्थोद्भवा अमी ।

हृञ् हरणे.–प्रहारस्ताडने, भोज्य आहारः, कर्पणे मतः ॥ ७ ॥
संहारः, क्रीडने वाच्यो विहारः, परिवर्जने ।
परिहारो,ऽथ मयस्योद्धारो निःसारणे स्मृतः, ॥ ८ ॥
उपायने तूपहारो, हरणार्थोद्भवा इमे ।

डुकृञ् करणे-विधौ प्रकारः, आकारः स्वरूपे, योग्यतार्थकः ॥ ९ ॥
अधिकारः समुद्दिष्ट, उपकारो हितं भवेत् ।
अपकारोऽहितं ख्यात, मनुकारो विडम्बनम्, ॥ १० ॥
रूपस्वभाववैजात्ये विकारो, वरणार्थकः ।
प्राकारः, करणार्थस्य धातोः शब्दा उदाहृताः ॥ ११ ॥

---

* मातृकायां विसर्जनीयो नास्ति, उत्तरत्राप्येवमेवानेकस्थलेषु ॥
† ' यस्मां ' इतिमातृका ॥
‡ कृशानुः=अग्नि । अग्नीनां त्रित्वात् कृशानुभिरित्यस्य त्रिभिरित्यर्थः ॥

आकारः* खनिपर्यायः, सङ्करो वर्णभेदजे, ।
उदितः प्रकरः पुञ्जे, समूहे निकरोत्करौ, ॥ १२ ॥
परिवारे परिकरस्तथैव कथितो बुधैः, ।

भू सत्तायाम्,—उत्पत्तौ प्रभवो, भङ्गे पराभव, उपस्थितौ ॥ १३ ॥
सम्भवो,ऽनुभवः साक्षात्कारे, विभव अर्जिते†, ।
उद्भवोऽङ्कुरभावे,ऽनादरे परिभवः स्मृतः, ॥ १४ ॥
तिरस्कृता वभिभवः, सत्तार्थजनिता इमे ।
मा माने,—प्रमाणपरिमाणे स्तः स्वार्थवाचकशाक्तिके, ॥ १५ ॥
अपमानावमानौ तु तिरस्कारार्थवाचकौ, ।
संमानः सत्कृतावुक्ते ऽनुमानं तर्क इष्यते, ॥ १६ ॥
निर्माणं रचना व्योम्नो विमानं यानमुच्यते, ।
उन्मानं द्रोणपर्यायो, ऽभिमानो गर्वसंज्ञकः, ॥ १७ ॥
प्रतिमानं प्रतीच्छायो पमानं साम्यमीरितम्, ।
धातोर्मानार्थकस्योक्ताः शब्दा अर्थविशारदैः ॥ १८ ॥

दिश अतिसर्जने, *

सन्देशो वाचके सद्भि रपदेशो मिषे स्मृतः, ।
निदेशः शासने मान भेदे प्रादेश‡ ईरितः, ॥ १९ ॥
निर्देशः कथने, त्वाज्ञायामादेशः प्रकीर्तितः ।
उद्देशः स्यात्परिकर, उपदेशो गुरूक्तिषु, ॥ २० ॥
शब्दा दानार्थसम्भूता विनीर्णीताः पुरातनैः ।

णीञ् प्रापणे

प्रणयः प्रेम, सन्देशेऽपनेयोऽनय उच्यते, ॥ २१ ॥
सान्त्वनेऽनुनयो, निर्धारणे निर्णय इष्यते, ।
विनयः प्रश्रये, नृत्यभावेऽभिनयसंज्ञकः, ॥ २२ ॥

* 'आकार' इति मातृका ॥ † 'उर्जिते' इति मातृका ॥

* ऽतिसर्जनम्=दानम् इति सिद्धान्तकौमुदी ॥

‡ 'प्रदेश' इति मातृका । 'प्रादेशतालगोकर्णास्तर्जन्यादियुते तते' इत्यमरः । 'उपसर्गस्य घञीति दीर्घः' इति तट्टीका । 'समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुते' इत्यापस्तम्बः (श्रौ० १।११।६) ॥

मौञ्जीविधावुपनयः, माङ्गैः परिणयो मतः ।
विवाहे, मापणार्थस्य धातोः शब्दा इमे स्मृताः ॥ २३ ॥
सृ गतौ-पुंश्चलीकर्मणि ख्यातोऽभिसारः शब्दकोविदैः, ।
संसारो जन्ममरणे, प्रसारो विसृतौ मतः, ॥ २४ ॥
निःसारः साररहिते,ऽपसारो दूरसर्पणे, ।
धारासम्पात आसारो,ऽतिसारो रेचनामये,‡ ॥ २५ ॥
प्रसरो विस्तरे ख्यातो, विसरो वृन्दवाचकः, ।
विडम्ब्यनुसरः* प्रोक्तः, समये ऽवसरः स्मृतः, ॥ २६ ॥
गत्यर्थसम्भवाः शब्दा निर्णीता निपुणैरिति ।
इण् गतौ-आयो द्रव्यागमे,ऽपायव्ययौ तु नशने मतौ, ॥ २७ ॥
गदितश्चाथ समयोऽनेहसङ्केतयोर्बुधैः, ।
अन्वयो वंशसम्बन्धे, निरयो दुर्गतौ मतः, ॥ २८ ॥
उपाय उपचर्यायां, विस्रम्भो† प्रत्ययः स्मृतः ।
शब्दशास्त्रप्रवीणैश्च गादितः स्वाद्यणादिषु‡, ॥ २९ ॥
समुदायः समुदयः समवायो गणार्थकाः, ।
पर्यायोऽपरनाम्नि स्या, त्तथा नाशेऽत्ययाप्ययौ, ॥ ३० ॥
उदयः प्रकटीभावे गत्यर्थोत्था अमी स्मृताः, ।
परेतः प्राप्तपञ्चत्वे प्रेतश्चापीदृशः स्मृतः ॥ ३१ ॥
अपेतो विगते, युक्ते समेतान्वितनामकौ, ।
दारिद्र्ये दुरितं, वीतं त्वसारं हस्ति वाजिनि, ॥ ३२ ॥
नीतं संप्रापिते§, दीप्ते प्राकट्य उदितः स्मृतः, ।
प्रतीतो निश्चयवति, व्यतीतस्तु गते भवेत्, ॥ ३३ ॥

‡ 'आसारो अतिसारेचनामये' इति मातृका ॥

* 'विडन्त्यनुसरः' इति मातृका ॥

† 'विश्रम्भ.' इति मातृकायां तालव्यमध्यो वर्तते । 'विस्रम्भदस्रविस्राणि' इति दन्त्यमध्येषूष्मविवेकः (९५ श्लो०) 'विस्रम्भ' शब्दव्याख्याने 'स्रम्भूङ् विश्वासे दन्त्यादिः ।' इति शब्दभेदप्रकाशव्याख्या ॥

‡ स्वादिषु अणादिषु च वैयाकरणै प्रत्ययशब्दो व्यवहृत इत्यर्थः ॥

§ 'नितसम्प्रापिते' इति मातृका ॥

युक्ते परीतः, संप्राप्त उपेतः प्राज्ञसंमतः, ।
अधीतस्तु कृताभ्यासे, शब्दा गत्यर्थसम्भवाः ॥ ३४ ॥
षञ्ज संगे-प्रस्तावे तु प्रसङ्गः स्या, न्निःसङ्गो बद्धचेतसि, ।
निषङ्ग इषुधौ, क्रोड उत्सङ्गः समुदाहृतः, ॥ ३५ ॥
अभिषङ्गः पराभूता-वनुषङ्गस्तु सङ्गतौ, ।
योगार्थसम्भवाः शब्दा विद्वद्भिः प्रकटीकृताः ॥ ३६ ॥
चर गतिभक्षणयोः-उच्चारो मेहने ख्यातो, ऽभिचारः कार्मणे* स्मृतः, ।
परिचारस्तु भृत्ये स्या, दुपचारोऽर्चने विधौ, ॥ ३७ ॥
अतिचारस्तु खेटस्याकाले† राश्यन्तरे गते, ।
प्रचारः प्रथितव्याप्ता, वपचारो विलुम्पने, ॥ ३८ ॥
संचारश्चेतसो भ्रान्तौ, विचारः स्याद्विमर्शने, ।
श्रुतिस्मृत्युदिते धर्म आचारः सम्प्रकीर्तितः, ॥ ३९ ॥
गत्यर्थप्रकृतेर्जाताः शब्दा वैशद्यमागताः ।
शीङ् स्वप्ने-संशयो द्वापरे ख्यात, आशयोऽन्तर्गते हृदः ॥ ४० ॥
कोष्ठे, चानुशयः पश्चात्तापे,थातिशयो भरे, ।
रुजां स्वरूपविज्ञानहेतावुपशयः स्मृतः, ॥ ४१ ॥
स्वप्नार्थधातुसम्भूताः शब्दाः ख्यातिमुपागताः ।
ग्रह उपादाने-प्रग्रहोपग्रहौ कारावन्धने, संस्मृतौ बुधैः ॥ ४२ ॥
संग्रहः सञ्चये वाच्यः, कथितस्त्वग्रहो हठे, ।
वर्षारोधेऽवग्रहः स्यात् पुनः स्तम्बेरमालिके‡ ॥ ४३ ॥
केतावुपग्रहः प्रोक्तो, विग्रहो वैरवर्मणोः, ।
अनुग्रहः कृपाभावे, घाते निग्रहः ईरितः, ॥ ४४ ॥
प्रतिग्रहस्तु दानाङ्गीकारे, ज्ञेयः परिग्रहः ।
दारे,ष्विति विशेषार्था उपादानार्थसम्भवाः ॥ ४५ ॥
सृज विसर्गे-संसर्गः स्पर्शने, भावे निसर्गः स्वस्थ उच्यते, ।

---

* 'कर्मणे' इति मातृका। 'मूलकर्म तु कार्मणम्' इत्यमरः । 'त्रासनोच्चाटनस्तम्भनवशीकरणादिकर्म' इति तद्व्याख्याने मुकुटः ॥

† 'स्तुखेटस्यात्काले' इति मातृका ॥

‡ यज्ञालिके यथा—'अवग्रहगृहीतोऽपि प्रतिभिन्नो नावरुध्यते' इति अवग्रहशब्दव्याख्याने अनेकार्थकैरवाकरकौमुदी ॥

विसर्गः सर्वैकृत्य*, उत्सर्गः प्रतिमोक्षणे, ॥ ४६ ॥
प्रतिसर्गः सृष्टिविधा,वुपसर्ग उपप्लवे ।
प्रादिष्वपीरिताः प्राज्ञैः, सर्जनार्थोद्भवा अमी ॥ ४७ ॥
षद्लृ विशरणगत्यवसादनेषु–प्रसादः परमामोदे, विषादस्तद्विपर्यये, ।
अवसादः कृशीभावे निषादो भिल्लनामनि, ॥ ४८ ॥
प्रसन्नः स्यात्प्रमुदिते, विषण्णः क्लिष्टचेतसि, ।
अवसन्नस्तनुतरे,निषण्णः संस्मृतः स्थिते, ॥ ४९ ॥
शब्दा एते †विशरणावसादनगतेर्भवाः ।
क्रमु पादविक्षेपे–प्रक्रमानुक्रमौ‡ स्यातां क्रमार्थावेव, संक्रमः ॥ ५० ॥
रवेराश्यन्तरगते, विपर्यासे त्वपक्रमः ।
पराक्रमो विक्रमश्च द्वौ स्यातां पौरुषार्थकौ§, ॥ ५१ ॥
निष्क्रमो निर्गमे ख्यात, आक्रमः परिवेष्टने, ।
उल्लङ्घनेऽतिक्रमो स्या, दुत्क्रमो मरणे स्मृतः, ॥ ५२ ॥
प्रदक्षिणार्थकः प्रोक्तः परिक्रम, उपक्रमः ।
आरम्भे, पादविक्षेपस्वार्थधातोरिति स्मृताः ॥ ५३ ॥
लष कान्तौ–विलासो नर्मणि ख्यात, उल्लासो मुदि संमतः, ।
मनोरथोऽभिलाषः, स्यात्परिलासस्तु मण्डने, ॥ ५४ ॥
दीप्त्यर्थसम्भवा एते शब्दाः प्रोक्ताश्च सूरिभिः ।
काशृ दीप्तौ–प्रकाशस्तेजसो धर्मे,ऽवकाशो महदन्तरे, ॥ ५५ ॥
स्फुटीभावेषु मनसो विकासः* संप्रकीर्तितः, ।

---

* 'सर्गवैकृत्ये' इति स्यात् ॥ † 'विसरण' इति मातृका ॥

‡ 'अनुगमौ' इति मातृका ॥ § पुरुषार्थकौ' इति मातृका ॥

| धातुपाठे 'लसश्लेषणक्रीडनयोः, लसशिल्पयोगे, लषकान्तौ' इति त्रयो धातवः पठ्यन्ते । आद्यौ दन्त्यान्तौ । अन्त्यस्तु मूर्धन्यान्तः । दीप्त्यर्थकः कोऽपि न दृश्यते । 'लषकान्तौ' इत्यत्र 'कान्तिरिच्छा' इति माधवाचार्यः । वोपदेवोऽपि 'लषञ् स्पृहि' इत्याह । तथा चैते सर्वे मूर्धन्यान्तलषधातूत्पन्नाः, लषधातुश्च दीप्त्यर्थक इति भ्रान्तिद्वयं ग्रन्थकर्तुर्वर्तते ॥

* 'विकासपर्णासधीरव्यूयासाः' (१०५ श्लो०) इत्यूष्मविवेकात् दन्त्यान्तः । तथा च 'कासृशब्दकुत्सायाम्' इति धातोर्व्युत्पाद्यः । 'दीप्त्यर्थकाशधातुरुत्पादनं तु भ्रममूलकम् ॥

प्रतीकाशश्च नीकाशः सङ्काशः सदृशार्थकाः, ॥ ५६ ॥
आकाशो वियति ज्ञेयो, दीप्त्यर्थप्रभवाः स्मृताः ।

डुदाञ् दाने–संप्रदानं चतुर्थ्यर्थेऽपादानं पञ्चमीगते, ॥ ५७ ॥
आदानं ग्रहणे, हेतौ निदानं परिकीर्तितम् , ।
दानार्थसम्भवाः शब्दाश्चत्वारः समुदाहृताः ॥ ५८ ॥

गम्लृ गतौ–सङ्गमो मिलने, वेदशास्त्रयोर्निगमागमौ, ।
विगमापगमौ द्वौ तु शब्दौ राहित्यवाचकौ, ॥ ५९ ॥
निर्गमो निष्क्रमे ख्यातो,ऽवगमोऽधिगतौ बुधैः, ।
बोधोऽभिगम उद्दिष्टः, साम्मुख्ये महतां गते, ॥ ६० ॥
उद्गमोपगमौ भावे प्राप्तौ च क्रमशः स्मृतौ, ।
सुगमो दुर्गमश्चेति शक्याशक्यगते मतौ, ॥ ६१ ॥
गत्यर्थसम्भवा एते शब्दा ज्ञेया विचक्षणैः ।

पद गतौ–प्रपन्नः शरणं प्राप्ते, सम्पन्नो धनपूरिते, ॥ ६२ ॥
उत्पन्नोऽपि च निष्पन्नो ह्यवप्येतौ समर्थकौ, ।
आपन्नश्च विपन्नश्च विपत्तिग्रस्त ईरितौ, ॥ ६३ ॥
प्रतिपन्नोपपन्नाभिपन्नाः प्राप्त्यर्थवाचकाः, ।
गत्यर्थसम्भवाः शब्दा विद्वद्भिः प्रकटीकृताः ॥ ६४ ॥

जि जये–विजयो विक्र(मे)* ... ... ... ।
.... .... ... .... ... ... ॥ ६५ ॥

श्लिष आलिंगने

... ... विश्लेषः परिरम्भवियोगयोः, ।
आलिङ्गनार्थसम्भूताविमौ विद्वद्भिरीरितौ ॥ ६६ ॥

---

* यद्यपि मातृकायामत्र त्रुट्यादिकं नास्ति परन्तु ६३ संख्यानन्तरं ६५ संख्याया निवेशो दृश्यत इति मध्ये पराजय, अपजयादिपदघटित एकः श्लोको भ्रष्ट इति स्पष्टमवसीयते ॥

† 'आघ्रणेषणं च विश्लेषः' इति स्यात् ॥

‡ 'उपचयोऽत्र लेपः' इति क्षीरतरंगिण्यां क्षीरस्वामी । भीमसेनधातुपाठे 'उपचयो न दृपः' इत्येष अस्यैवापपाठः । दिहञो लिपि' इति कविकल्पद्रुमे वोपदेवः । आभरणकार-मैत्रेयरक्षित-माधवाचार्यैः उपचयशब्दस्यार्थो न निरूपितः। सिद्धान्तकौमुद्यां 'उपचयो वृद्धिः' इति पाठः प्रामादिक इत्यनुमीयते ॥

दिह उपचये+-प्रदेहो लेपपर्यायः, सन्देहः संशये स्मृतः, ।
विदेहः परमो हंसे, उपलेपार्थसम्भवाः ॥ ६७ ॥

डुधाञ् धारणपोषणयोः-उपाधिर्वैकृतं, व्याधिश्चाधिर्देहमनोरुजः, ।
प्रधिर्नेमि, र्विधिरजे साधने नियतौ तथा, ॥ ६८ ॥
मर्यादाऽवधिरुद्दिष्टः, सन्धिर्योगे द्वयोर्मतः, ।
परिधिः परिवेषे स्या,द्धारणार्थोद्भवाः स्मृताः ॥ ६९ ॥

लप व्यक्तायां वाचि-प्रलापोऽनर्थवाक्यं स्या.दपलापस्तु निह्नुते, ।
संलापोऽन्योन्यवचन, मनुलापो मुहुर्मुहुः, ॥ ७० ॥
विप्रलापो विरुद्धे स्या, त्सुप्रलापस्तु सूनृते, ।
आलापो भाषणे प्रोक्तो, विलापः परिदेवने, ॥ ७१ ॥
उल्लापो नाम्नि पर्याये, भाषणार्थोद्भवा इमे ।

आप्लृ व्याप्तौ-प्राप्तावाप्तौ च लब्धार्थे, प्रविष्टे व्याप्त ईरितः ॥ ७२ ॥
आप्तः स्वीये, समाप्तः स्यात्पूर्णे, परिमिते त्वथ ।
पर्याप्त, इति निर्दिष्टाः शब्दा व्याप्त्यर्थसम्भवाः ॥ ७३ ॥

चिञ् चयने-प्रचयोऽतिशये ख्यातो, वृद्धावुपचयो मतः, ।
निर्धारणे निश्चयः स्या, न्निचयस्तु कदम्बके, ॥ ७४ ॥
ग्रहणे कुसुमादीनां सम्प्रोक्तोऽवचयो बुधैः, ।
उक्तः परिचयोऽभ्यासे, चयनार्थोद्भवा अमी ॥ ७५ ॥

विश प्रवेशने-गर्तौ प्रवेशो विज्ञेयः, स्वप्नः संवेश इत्यपि, ।
व्याप्तिः शरीरे दैवी या स आवेश उदाहृतः, ॥ ७६ ॥
निवेशः शिविरे ज्ञेयो, निर्वेशो भोगसम्भवः ।
उपवेशः स्थितौ प्रोक्तः, शब्दाः स्युर्वेशनार्थजाः ॥ ७७ ॥

विद ज्ञाने-संवेदो ज्ञानपर्यायो, निर्वेदः स्वावमाननम्, ।
उपवेदस्त वेदानामायुर्वेदादिषु स्मृतः, ॥ ७८ ॥
ज्ञानार्थधातुसञ्जाताः प्रसिद्धिं समुपागताः ।

वद व्यक्तायां वाचि-संवाद उभयोः प्रश्नोत्तरे ख्यातोमनीषिभिः, ॥ ७९ ॥
परिवादापवादौ तु निन्दायां, कलहे त्वथ ।

प्रवादश्च विवादश्च, दुर्वादो निष्ठुरं वचः, ॥ ८० ॥
अभिवादो नमस्कारे, ऽनुवादः कथने* स्मृतः, ।
व्यक्तवागर्थसम्भूताः शब्दा वैविध्यमागताः ॥ ८१ ॥
भिदिर् विदारणे-प्रभेदश्च विभेदश्च द्वौ स्यातां स्वार्थवाचकौ, ।
भवेदुद्भेद उत्पत्तौ, संभेदः सिन्धुसङ्गमे, ॥ ८२ ॥
विदारणार्थधातूत्थाः शब्दाः प्रोक्ता विशारदैः ।
रञ्ज रागे-औदासीन्ये विरागः स्या, दनुरागो रतौ मतः, ॥ ८३ ॥
उपरागः पुष्पवतोर्ग्रहणे* सम्प्रकीर्तितः, ।
रञ्जनार्थोद्भवाः शब्दा एत एवोपपादिताः ॥ ८४ ॥
युजिर् योगे-प्रश्नेऽनुयोगः, संयोगो मिलने संप्रकीर्तितः, ।
भेदे वियोग, उद्योगः प्रोक्तः परिकरे बुधैः, ॥ ८५ ॥
कल्पे प्रयोगः, कर्तव्ये विनियोग उदाहृतः, ।
उपयोगस्तु साकल्ये, योजनार्थसमुद्भवाः ॥ ८६ ॥
चिती संज्ञाने-प्रचेताः पाशिनि ख्यातो, विचेता मोहसङ्कुले, ।
संज्ञानार्थोद्भवावेतौ शब्दौ विख्यातिमागतौ ॥ ८७ ॥
भुज पालनाभ्यवहारयोः-शृङ्गारानुभवे ज्ञेयः सम्भोगः, पूर्णतार्थकः ।
आभोगः कविभिः प्रोक्त, उपभोगस्तु सेवने, ॥ ८८ ॥
पालनाभ्यवहारार्थधातोः शब्दा इति स्मृताः ।
रम क्रीडायाम्१-आरामः स्यादुपवने, विरामोऽन्ते प्रकीर्तितः, ॥ ८९ ॥
रमणीयेऽभिरामः स्यात्, क्रीडनार्थोद्भवा अमी ।
छद् अपवारणे-‡प्रच्छन्नं चापि विच्छन्नं §......स्यात्तिरोहिते, ॥ ९० ॥

* 'अववादः कथने, इति मातृका ॥

* पुष्पवतः=सूर्यचन्द्रयोः । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः ॥

१ धातुपाठकोशेषु 'रमुक्रीडायाम्' इत्युदित्पाठः प्राय उपलभ्यते । अस्योदित्वं केचिदिच्छन्ति । तेषां मते रत्वा, रमित्वा ।' इति धातुप्रदीपे मैत्रेयरक्षितः । मनोरमायां-'अयमुदिदिति मत्वा वोपदेवाद्यो रत्वा, रमित्वेत्युदाजन्हुस्तन्महान्तो न सहन्ते इति माधवः । इत्युक्तेः उदित्वं परित्यक्तम् ॥

‡ 'प्रच्छिन्नं चापि विच्छिन्नं' इतीकारमध्यो मातृकायाम् ॥

§ अक्षरलोपसूचकं ˇ. एतादृशं हंसपदीचिह्नमात्रं मातृकायां वर्तते ॥

छादनार्थोद्भवावेतौ गदितौ शब्दवेदिभिः ।
छिदिर् द्वैधीकरणे-उच्छिन्नं चापि विच्छिन्नं नष्टे· चाथ विनिश्चिते ॥ ९१ ॥
परिच्छिन्नं बुधैः प्रोक्तं, छेदनार्थोद्भवा इति ।
असु क्षेपणे-निःसारणे निरसनं*, शराभ्यास उपासनम्, ॥ ९२ ॥
आसनं योगभेदे स्या, द्व्यसनं दुःखमीरितम्, ।
परासनं निहनन मपासनमपि स्मृतम्, ॥ ९३ ॥
स्थापने न्यसनं ख्यातं, क्षेपणार्थोद्भवा अमी ।
लीङ् श्लेषणे†-प्रलयो विलयश्चेति प्रणाशार्थप्रबोधकौ, ॥ ९४ ॥
तिरोभावार्थसम्भूता, भवने निलयालयौ, ।
आस उपवेशने-प्रासः कुन्ते, समासः स्यात् द्वन्द्वतत्पुरुषादिषु ॥ ९५ ॥
संक्षेपे च, निरासः स्याद्दूरीकरणसंज्ञकः, ।
कृष्णद्वैपायने व्यासो विस्तरे च प्रकीर्तितः, ॥ ९६ ॥
मन्त्राक्षराणामङ्गेषु धारणं न्याससंज्ञकम्, ।
अध्यासो मनसः सक्ता-वभ्यासः स्यात्परिश्रमे, ॥ ९७ ॥
उदासस्तु विरक्ते स्या, दुपवेशार्थसम्भवाः ।
ईक्ष दर्शने-इच्छाऽपेक्षा, तितिक्षा स्यादुपेक्षा,ऽऽलोकने वरे ॥ ९८ ॥
समीक्षा गुणदोषाणां, परीक्षा स्याद्विमर्शने,‡ ।
मार्गावलोके स्वेष्टस्य प्रतीक्षा समुदाहृता, ॥ ९९ ॥
दर्शनार्थसमुत्पन्ना इति शब्दा इहोदिताः ।
ष्ठा गतिनिवृत्तौ-आस्थानी ज्ञेयमास्थानं, प्रस्थानं गमनं मतम्, ॥ १०० ॥
चिह्नं संस्थान,मुत्थानं स्वास्थानादासनादितः, ।
उपस्थानं स्तवः प्रोक्त,मधिष्ठानं तु सन्निधिः, ॥ १०१ ॥

---

* 'निसरनम्' इति मातृका ॥

† धातुपाठे दिवादिषु लीङ् श्लेषणे, क्र्यादिषु ली श्लेषणे, चुरादिषु ली द्रवीकरणे इति त्रयो धातवः पठ्यन्ते । कविकल्पद्रुमेऽपि-'ली कि द्रावणे. ली ङ्य ओ श्लिषि, ली ल्पी गि च' इति त एव त्रय उपलभ्यन्ते । धातुवृत्तिष्वपि लीधातोः तिरोभावार्थकत्वं नोपलभ्यते । अतोऽत्र मूलं मृग्यं, तथापि क्षीरतरंगिण्यां निलय प्रलयशब्दौ दैवादिकाद्व्युत्पादिताविति स एवात्र निवेशितः ॥

‡ 'विमर्शमे' इति मातृका ॥

अवस्थानमवस्था स्यात्, सुस्थानं रुचिरे स्थले, ।
प्रतिष्ठानं दैवतस्य स्थापनं विधिवत् स्मृतम् ॥ १०२ ॥
अनुष्ठानं प्रयोगः स्या,द्धातोर्गतिनिवृत्तिजाः ।
या प्रापणे-प्रयातः प्रस्थिते ख्यातो,ऽनुयातोऽनुसृतः स्मृतः, ॥ १०३ ॥
प्रतियातोऽरिसाम्मुख्यं गते निगदितो बुधैः, ।
निर्यातो निःसृते ज्ञेयो,ऽपयातो विगते भवेत्, ॥ १०४ ॥
शठे वियातः संप्रोक्तो,ऽवयातो विदिते स्मृतः,* ।
प्रापणार्थसमुत्पन्नाः शब्दा विख्यातिमागताः ॥ १०५ ॥
तप सन्तापे-प्रतापस्तेजसः पुञ्जे नृपदर्पेऽपि सम्मतः, ।
सन्तापः संज्वरो ज्ञेय, आतपो घर्म† उच्यते, ॥ १०६ ॥
परितापोपतापौ स्तः सदृशार्थस्य बोधकौ, ।
पश्चात्तापोऽनुतापः स्या, त्सन्तापार्थोद्भवा अमी ॥ १०७ ॥
पत्लृ गतौ-निपातः सिद्धशब्देषु, संपातो दृष्टिसंज्ञकः, ।
प्रपातो भृगुरादिष्ट, उत्पातोऽरिष्टसूचकः, ॥ १०८ ॥
व्यतीपातस्तु योगेषु ज्योतिर्विद्भिः§ प्रकीर्तितः, ।
परिपातः* प्रवेशः स्यात्, पतनार्थसमुत्थिताः ॥ १०९ ॥
षु प्रसवैश्वर्ययोः- प्रसवो जनने, स्नानेऽभिसवः परिकीर्तितः, ।
आसवो मधुसंज्ञः स्या, दुत्सवः शर्मकर्मणि, ॥ ११० ॥
आविर्भावार्थसम्भूताः शब्दा उक्ता विशारदैः ।
पा पाने-निपानमुपकूपः स्या, दापानं पानगोष्ठिका, ॥ १११ ॥
अनुपानं भेषजस्यानुकूलं यत्प्रदीयते, ।
पानार्थधातुसञ्जाता इति शब्दाः प्रथां+ गताः ॥ ११२ ॥
षिध गत्याम्-निषेधप्रतिषेधौ तु वर्जनार्थप्रवर्तकौ, ।
उत्सेध उन्नतत्वे स्या, द्गत्यर्थजनिताः स्मृताः ॥ ११३ ॥

* 'अवयातविदिते' इति मातृका ॥
'नितापः' इति मातृका ॥
'परितापः' इति मातृका ॥
शर्म सुखम् । तत्साधनं कर्म शर्मकर्म । शुभकर्मेत्यर्थः ॥
'पृथं' इति मातृका ॥
† 'आतापो धर्म' इति मातृका ॥
§ 'जोतिर्विद्भिः' इति मातृका ॥

षिच क्षरणे–लालास्रावे प्रसेकः स्या॰ न्निषेको गर्भधारणः§ ।
आसेकः सिञ्चने ख्यातो, ऽभिषेको राज्यमङ्गले, ॥ ११४ ॥
परिषेकः प्रोक्षणे तु, सेचनार्थसमुद्भवाः ।
क्षिप प्रेरणे–प्रक्षेपो मिश्रणं सिद्धे भेषजे भेषजस्य यत्, ॥ ११५ ॥
आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ।
अर्थालङ्कार इत्युक्तः प्रवीणैः पूर्वसूरिभिः ॥ ११६ ॥
वह प्रापणे–ज्योतिश्चक्रभ्रमे+ वायुः प्रवहो, निवहो गणे ।
कार्यसिद्ध्यवसानो यो यत्नो निर्वाहसंज्ञकः ॥ ११७ ॥
धारागतिः प्रवाहः स्या, त्संवाहः पादसेवनम् ।
विवाहोद्वाहनामानौ गदितौ पाणिपीडने ॥ ११८ ॥
प्रापणार्थसमुद्भूताः शब्दाः प्रोक्ता मनीषिभिः ।
मुद हर्षे–प्रमोदामोदसम्मोदा इति हर्षार्थसम्भवाः ॥ ११९ ॥
णुद प्रेरणे–विनोदः परिहासे स्या त्प्रणोदः परिमार्जने* ।
तॄ प्लवनतरणयोः स्तॄञ् आच्छादने
उत्तरः श्रेष्ठपर्याय आतरस्तरवेतनम् ॥ १२० ॥
अवतारोऽवतरणं, दानं वितरणं स्मृतम् ।
जले प्रतरणं, क्लेशान्मुक्तिर्निस्तरणं मतम् ॥ १२१ ॥
पारङ्गते तूत्तरण, मासनास्तरणे समे ।
स्थण्डिले परितो दर्भैः परिस्तरणमीरितम् ॥ १२२ ॥
पाषाणे प्रस्तरः प्रोक्तो, ऽसंक्षेपे विस्तरो मतः ।
तरणाच्छादनार्थोत्थाः सुधीभिः संप्रकाशिताः ॥ १२३ ॥
प्लुङ् गतौ–परिप्लवस्तु चाञ्चल्य, उपप्लव उपद्रवे ।
विप्लवस्तु विपर्यास, आप्लवः स्नानकर्मणि ॥ १२४ ॥
उत्प्लवः कूर्दने ख्यात, स्तरणार्थोद्भवा† इति ।

§ गर्भस्य स्फुटताज्ञाने निषेकः परिकीर्तितः । ततस्तु स्पन्दनात् कार्यं सवनं तु विचक्षणे' इति शङ्खस्मृतिः २ अ॰ १ श्लो॰

+ 'ज्योतिश्चक्र' इति मातृका॥

* अत्र धात्वर्थसूचकाभावात्कश्चिद्ग्रन्थः पतित इति प्रतिभाति ॥

† 'तॄ प्लवनतरणयोः' इत्यत्र प्लवनस्याप्यर्थतया निर्देशादत्र तरणस्य प्लुधातोरर्थत्वेन निर्देशः संगच्छते ॥

बन्ध बन्धने-सङ्गीतेषु प्रबन्धः स्या, दनुबन्धोऽनुवृत्तिकृत् ॥ १२५ ॥
सम्बन्धोऽन्वय उद्दिष्टो, निर्बन्धस्तु हठे भवेत् ।
निबन्धो ग्रन्थरचना, प्रतिबन्धस्तु रोधकः ॥ १२६ ॥
विबन्धो मलरोधे स्या, द्बन्धनार्थसमुद्भवा ।
दुह प्रपूरणे*-जलनिःसारणे ख्यात उद्दोहस्तु जलाशयात् ॥ १२७ ॥
सन्दोहः समुदाये स्या, त्पूरणार्थोद्भवा इमौ ।
कटे वर्षावरणयोः-समीपवर्ति निकटं, प्रकटं प्रादुरागतम् ॥ १२८ ॥
सङ्कटं क्लेशपर्यायो, विकटं वक्रमुच्यते ।
उत्कटं प्रचुरं ख्यातं, शब्दाः शब्दार्थधातुजाः† ॥ १२९ ॥
बुधिर् बोधने-प्रबोधो जागरे ख्यातो,ऽवबोधो ज्ञानमुच्यते ।
अनुबोधः पत्रलेखा, ऽऽमन्त्रे सम्बोधनं स्मृतम् ॥ १३० ॥
बोधनार्थसमुत्पन्नाः शब्दाः प्रख्यातिमागताः ।
कॄ विक्षेपे-प्रकीर्णमवकीर्णं च प्रसृते च प्रसारिते ॥ १३१ ॥
सङ्कीर्णं स्यात्सङ्कुचिते, आकीर्णं व्याप्तमुच्यते ।
शब्दा विकीर्णार्थोत्थाश्च विनिर्णीताः कवीश्वरैः ॥ १३२ ॥
हन हिंसागत्योः-अभिघातस्तु शस्त्राद्यैः प्रहारस्तु उपस्थितः ।
प्रोक्तो निर्घात उत्पातः, शब्दा हिंसार्थसम्भवाः ॥ १३३ ॥
हत्यायामपघातः स्या, त्सङ्घातो गणवाचकः ।
कृष विलेखने-उक्तः प्रकर्ष आधिक्ये, ऽपकर्षोत्कर्षसंज्ञकौ ॥ १३४ ॥
अनुत्तमोत्तमत्वे च, निष्कर्षः सारसम्मतः ।
अनुकर्षो दार्वधःस्थं स्यन्दनस्य प्रकीर्तितम् ॥ १३५ ॥
प्रकृष्टमुदितप्राय, मुत्कृष्टं श्रेष्ठवाचकम् ।
आकृष्टं कर्षितं प्राहु, र्निकृष्टं नीचमुच्यते ॥ १३६ ॥
विलेखनार्थसम्भूता, अपकृष्टं तथैव च ।
वस निवासे-विदेशगमने विज्ञैः प्रवासः संप्रकीर्तितः ॥ १३७ ॥
ख्यातो निवासः संवास आवासो मन्दिरं स्मृतम् ।

* 'प्रपूरणं पूरणाभावो रिक्तीकरणम् । उपसर्गोऽत्र धात्वर्थं बाधते प्रस्थानवत्।'
इति भीमसेनधातुपाठः । अतोऽत्र पूरणार्थत्वलेखः प्रामादिकः ॥
† शब्दार्थकः कटधातुः धातुपाठेषु नोपलभ्यते ॥

अधिवासो दैवतस्य* पूजनात्प्रागुदीरितः ॥ १३८ ॥
विघासोद्वासनामानावुक्तावुच्चाटने बुधैः ।
उपवासो व्रते प्रोक्तो, वसधातोः समुत्थिताः ॥ १३९ ॥

रभ राभस्ये—उक्तः प्रारम्भ आरम्भः कार्यादिः, परिरम्भकः ।
आश्लेषे, वेगबाहुल्ये संरम्भः संप्रकीर्तितः ॥ १४० ॥
वेगार्थप्रकृतेर्जाताः शब्दाः धीरैः समीरिताः ।

णम महत्वे शब्दे च—नमस्कृतिः प्रणामो,ऽथ परिणामोऽन्तवाचकः ॥ १४१ ॥
विनामो वङ्क्षणानाहः, प्रणतो नम्रसंज्ञकः ।
ज्ञेयं परिणतं पक्वं, समुत्पन्नतमुच्यते ॥ १४२ ॥
सम्यगीषन्नते शब्दौ भवेतां सन्नतानतौ ।
मासे तूपनतं, धातोः स्तुत्यर्थात्समुपस्थिताः ॥ १४३ ॥

ऊह वितर्के समूहन्व्यूहनामानौ व्रजे,ऽथो वस्तिकर्मणि ।
निरूहो रूढिमायातो, वितर्कार्थसमुद्भवाः ॥ १४४ ॥

भा दीप्तौ-प्रभावः कान्तिसंस्थाने, प्रतिभावमतिक्रमे+ ।
दीप्त्यर्थसम्भवाः शब्दाः प्रथिता विदुषां मते ॥ १४५ ॥

वृञ् वरणे—गोत्राङ्के प्रवरः श्रेष्ठे, विले विवरमुच्यते ।
सङ्गोपने* संवरणं, व्याख्या विवरणं स्मृतम् ॥ १४६ ॥
वेष्टने स्यादावरणं, वास प्रावरणं मतम् ।
उत्तरीये तथैव स्यात्प्रावारः सूरिसम्मतः ॥ १४७ ॥
कुटुम्बं परिवारः स्या, त्सम्मते शब्दशास्त्रिणाम् ।
संवारश्च विवारश्च प्रयत्नावक्षरेष्विमौ ॥ १४८ ॥
दुर्वारो दुर्निवार्ये च, शब्दाः संवरणार्थजाः ।

---

* 'देवदत्तस्य' इति मातृका ॥

| मातृकायां 'संस्थाने' इत्यस्यानन्तर ˇ एवं हंसपदीचिह्नं दृश्यते । ततः 'प्रतिभामति' इति वर्तते । अनन्तरं भा इत्यस्योपरि तिर्यग्रेखाद्वयं विलिख्य पङ्क्त्याधोभागे 'व' इति, 'ति' इत्यस्यानन्तरं + एवं हंसपदीचिह्नं विलिख्य 'क्रमे' इति च शोधितम् । तथाचैषा आनुपूर्वी निष्पन्ना । 'दीप्त्यर्थसम्भवाः शब्दाः' इति बहुवचननिर्देशादत्र ग्रन्थपात अनुमीयते । एतत्संशोधनं तु ग्रन्थपाता-नभिज्ञकृतमिति ममाशयः ॥

* 'संगोपने' इति मातृका ॥

णह् बन्धने-संनाहो वर्मणि प्रोक्त, उपनाहो निबन्धने ॥ १४९ ॥
आनाहो व्याधिभेदे स्या,त्परिणाहो विशालता ।
बन्धनार्थभवाः शब्दा नानार्थद्योतकाः स्मृताः ॥ १५० ॥
रुधिर् आवरणे-निरोधो बन्धने वैरे विरोधः समुदाहृतः ।
अवरोधस्तु शुद्धान्ते, शब्दा आवरणार्थजाः ॥ १५१ ॥
ख्या प्रकथने-व्याख्या विवरणे,ऽभिख्या ऽऽभाया+ ,माख्या तु नामनि ।
गणनायां तु संख्या स्या, त्कथनार्थसमुद्भवाः ॥ १५२ ॥
क्लृपू सामर्थ्ये-सङ्कल्पश्च विकल्पश्च मनोधर्मावुदाहृतौ ।
अनिश्चयो विकल्पः स्या,त्सङ्कल्पो निश्चयात्मकः ॥ १५३ ॥
अनुकल्पोऽधमे कल्प, आकल्पो वेष उच्यते ।
सामर्थ्यार्थसमुत्पन्नाः कृतिभिः प्रतिपादिताः ॥ १५४ ॥
या प्रापणे-प्रयाणमाहुः प्रस्थाने,ऽपयानं स्यात्पलायनम् ।
निर्याणं मरणे चा थ, पक्षिनोपाङ्गयोरपि ॥ १५५ ॥
अभियानं रणे धैर्यं, प्रापणार्थसमुद्भवाः ।
श्रिञ् सेवायाम्-प्रश्रयो विनये ख्यातः, सहाये संश्रयाश्रयौ ॥ १५६ ॥
व्यपाश्रयस्तु दोषाणामभावे संप्रणोदितः ।
सेवार्थधातुसञ्जाताः प्रगीताः* पण्डितैरिति ॥ १५७ ॥
डुधाञ् (हि) धारणपोषणयोः-प्रहितं प्रेषिते प्रोक्तं, संहितं सन्धितं समम् ।
निक्षेपे निहितं ज्ञेय, माहितं तद्वदेव हि ॥ १५८ ॥
गदितं विहितं कृत्ये, पिहितापिहिते पुनः ।
आच्छादने, प्रकथनेऽभिहितं सम्यक्कीर्तितम् ॥ १५९ ॥
संधृते परिधानीये वस्त्रे परिहितं स्मृतम् ।
उक्तं चोपहितं प्राज्ञैरुपकारे पुरातनैः ॥ १६० ॥
अपकारे त्वपहितं, धातोः सन्धारणार्थजाः ।
फुल्ल विकसने-प्रफुल्लोत्फुल्लसंफुल्ला विकासार्थभवाः स्मृताः ॥ १६१ ॥

---

+ आभा शोभेत्यर्थः । तथा चामरः—'अभिख्या नामशोभयोः' इति ॥
* 'प्रणीता' इति मातृका ॥

अन प्राणने–प्राणोदानसमानाश्चापानव्यानौ च वायवः ।
देहिनां देहिकृत्यार्थसातत्यगमनार्थजाः ॥ १६२ ॥
अञ्चु गतिपूजनयोः–प्राच्यवाची प्रतीची चाथोदीची च गतार्थजाः ।
शक्रान्तकजलेशैलविलानां क्रमशो दिशः ॥ १६३ ॥

उपसर्गवर्गः सम्पूर्णः ॥



॥ श्री जिनाय नमः ॥

# कलिकालसर्वज्ञभगवच्छ्रीहेमचन्द्राचार्यविरचित-तत्त्वप्रकाशिका--प्रकाशाभिधशब्दमहार्णवन्यासान्तर्गतं प्रादीनामर्थनिदर्शनम्

प्रादीनामर्थनिदर्शनमाचार्याः परानुग्रहार्थमारभन्ते । यथा— 'प्र' आदिकर्मोदीरणभृशार्थैश्वर्य-संभवातियोग-शुद्धीच्छा-प्रीति-शान्ति-पूजा-दर्शन-तत्पर-प्रशंसा-संग-दिग्योगावयववियोगान्तर्भाव-हिंसा-बहुत्व-महत्त्व-स्थिति-दान-नानार्थ-दक्षिणानुवृत्त्यादिषु । आदिकर्मणि-कर्तुमारब्धः प्रकृतः कटो देवदत्तेन । उदीरणे उदीर्णा मूषिका प्रबला मूषिकाः । भृशार्थे-भृशं वृद्धाः प्रवृद्धाः नद्यः । एश्वर्ये-ईश्वरो गृहस्य, प्रभवति गृहस्य, प्रभुर्देशस्य । संभवे-हिमवतो गङ्गा प्रभवति । नियोगे नियुक्ते सैन्ये प्रकृतः । शुद्धौ-प्रसन्ना आपः, प्रसन्ना द्यौः, प्रसन्नेन्द्रियः । इच्छार्थे इच्छति कन्यां प्रार्थयते कन्याम्, इच्छति परदारान् प्रकुरुते परदारान् । प्रीतौ-प्रीणाति राजा प्रसीदति राजा । शान्तौ-शान्तात्मा प्रश्रितः प्रशान्तः, प्रश्रितं वाक्यमाह । पूजायाम्—प्राञ्जलिः प्रह्वः । दर्शने-प्रियां दृष्ट्वा क्रीडति प्रक्रीडति । प्रशंसायाम्-शोभनं शास्त्रं प्रधानं शास्त्रम् । सङ्गे-प्रसक्तः प्रमत्तः । दिग्योगे-पूर्वा दिक् प्राची दिक् । अवयवे-पघणोऽगारस्य प्रगाणोऽगारस्य । वियोगे वियुक्तो वसति प्रवसति । अन्तर्भावे-अन्तर्भूतः प्रविष्टः, अन्तः क्षिप्तः प्रक्षिप्तः । हिंसायाम्-प्रहरति । बहुत्वे-बहुचौरो देशः प्रचौरो देशः । महत्त्वे-महानध्वा प्रकृष्टोऽध्वा स्थितौ शास्त्रं प्रमाणम्, लोकः प्रमाणम् । दाने-देवेभ्यो ददाति प्रयच्छति । नानार्थे नाना कीर्णा प्रकीर्णाः । नाना दक्षिणाः प्रदक्षिणम् । अनुवृत्तौ-अनुवृत्तः शिष्यः प्रशिष्य इति ॥

'परा' वध-घर्षण-स्वर्गति-विक्रमा-प्रत्यक्षानाभिमुख्य-भृशार्थ-मोह-प्रातिलोम्येषु । वधे-पराघातः । घर्षणे-परामर्शनम् । स्वगतौ स्वर्गतः परेतः । विक्रमे-पराक्रमः । अप्रत्यक्षे परोक्षम् । अनाभिमुख्ये-परावृत्तः पराङ्मुखः । भृशार्थे पराजितः । मोहे-पराभूतः । प्रातिलोम्ये-परावृत्तो युद्ध इति ॥

'अप' वर्जनवियोगालेखन-चौर्य-निर्देश-वैकृत-विधिविपर्यय-संग्रहणावयव-

पूजानिह्नवसव्यवृत्तिषु । वर्जने-अपसाकेताद् वृष्टो मेघः । वियोगे-अपयुक्ता गौर्वत्सेन । आलेखने-अपस्किरते वृषभः । चौर्ये-अपहरति । निर्देशे-अपदिशति परम् । वैकृते-अपजल्पति । विधिविपर्यये-अपशब्दः अपनयः । ऋणग्रहणे-अपमित्य याचते । अवयवे-अपस्करो रथाङ्गम् । पूजायाम्-अपचितो गुरुर्देवदत्तेन । निह्नवे शतमपजानीते, सहस्रमपजानीते । सव्यवृत्तौ अपसव्यं गच्छति ॥

'सम्'-मूर्ति-वचनैक्य-प्रभव-समन्ताद्भाव-भूषण-समवायाभिमुख्य-यौगपद्य-श्लेषण-भृशार्थ-दर्शनीयत्व-सादृश्यानास्थिताऽपिधान-क्रोध-मर्यादेर्ष्या-चीवरग्रहणास्पष्ट-प्रीतिस्वीकरणाल्पार्थाभ्यास-प्राधान्य-पुनःक्रियासु । मूर्तौ-संहता मूर्तिर्घटादीनाम् । वचनैक्ये एकवादः संवादः । प्रभवे-तिलेभ्यस्तैलं संभूतम् । समन्ताद्भावे-समन्ताद् गच्छति संगच्छते । भूषणे भूषिता कन्या संस्कृता कन्या । समवाये संकरः । आभिमुख्ये-समुत्तिष्ठति । यौगपद्ये युगपत्कृतः संकृतः । श्लेषणे-सन्धिः । भृशार्थे-सन्दहति । दर्शनीयत्वे-संस्थिता कन्या दर्शनीयेत्यर्थः । सादृश्ये-गोसंस्थानं गवयस्य । अनास्थिते-संस्थितः केतुः । अपिधाने-संवृतं द्वारम् । क्रोधे-संरम्भः । मर्यादायाम्-संस्था । ईर्ष्यायाम्-संलापः । चीवरग्रहणे-संचीवरयते भिक्षुः । अस्पष्टे संशयः । प्रीतौ-संभाषणम् । स्वीकरणे-संगृह्णाति । अल्पार्थे-समर्थम् । अभ्यासे-समीपम् । प्राधान्ये-समर्थः, सम्राट् । पुनःक्रियायाम्-पुनर्द्धावति संधावति, पुनस्तपति संतपति ॥ ४ ॥

'अनु' देशाधीष्ट-सामीप्य-स्वाध्याय-साम्यार्थाभावायति-निसर्ग-भृशार्थ-सादृश्यानुवृत्ति-हितार्थ-लक्षण-हीनार्थ-तृतीयार्थ-स्वाध्यायाधिवयवीप्सासु । देशे-अनुप्रदेशः । अधीष्टे-इन्द्रानुब्रूहि । सामीप्ये-अनुशोणं पाटलिपुत्रम् । स्वाध्याये-अनुपदम् अनुवाक्यम् । साम्ये अनुमतं अनुवदति । अर्थाभावे-अनुपतति । आयत्याम्-अनुशयः अनुबन्धः । निसर्गे-अनुज्ञातोऽसि । भृशार्थे-अनुरक्तः, अनुस्मरति । सादृश्ये अनुकरोति, अनुरूपम् । अनुवृत्तौ-सुवर्चला आदित्यमनुपर्येति । हितार्थे-अनुलोममनुक्रोशं करोति, अनुगृह्णाति । लक्षणे वृक्षमनु विद्योतते । हीने-अनुजिनभद्रगणि व्याख्यातारः । तृतीयार्थे-नदीमन्ववसिता सेना नद्या सहावबद्धेत्यर्थः । स्वाध्यायाधिक्ये-अनूचान उपाध्यायः । वीप्सायां-वृक्षमनुसिञ्चति ॥ ५ ॥

'अव' विज्ञानाधोभाव-स्पर्द्धा लम्बन-सामीप्य-शुद्धि-स्वादुकार-पदर्थ-व्याप्ति-भृशार्थ-निश्चय-परिभव-प्राप्ति-गाम्भीर्य-वृत्तान्त-वियोग-वर्चस्क देशाख्याऽहितक्रियाश्रयस्पर्शेषु । विज्ञाने-अवगच्छति । अधोभावे-अधःऽक्षेपणमवक्षेपणम् । स्पर्द्धायाम्-

अवक्षिपति मल्लौ मल्लं । आलम्बने-अवष्टभ्य यष्टिं गच्छति । सामीप्ये-अवष्टब्धा शरत् । शुद्धौ अवदातं मुखम् । स्वादुकारे अवदंशः पानस्य । ईषदर्थे-ईषल्लीढमवलीढम् । व्याप्तौ-अवकीर्णं पांशुभिः । भृशार्थे-अवगाढो दोषः । निश्चये-अवधृतं कार्यम् । परिभवे-अवमन्यते । प्राप्तौ-अवाप्तोऽर्थः । गाम्भीर्ये-अवस्थितः । वृत्तान्ते का अवस्था । वियोगे-अवमुक्तनुपूरा कन्या । वर्चस्के-अवस्करः । देशाख्यायाम्-अवकाशः । अहितक्रियायाम्-अवदुष्यन्ते कार्यं । आश्रये-अवलीनो वायसः । स्पर्शे अवगाहसुखं तोयम् ॥ ६ ॥

'निर्' वियोग-भृशार्था-भावात्यय-प्रादुर्भाव-हेत्व-वधारणा-देशा-तिक्रमणाभिनिःसरणेषु । वियोगे-वियुक्तः शल्ये निःशल्यः । भृशार्थे-भृशं दग्धः निर्दग्धः । अभावे-मक्षिकाणामभावो निर्मक्षिकं निर्मशकम् । अत्यये-अतीतमेघं नभः निर्मेघम् । प्रादुर्भावे-निर्मितं निष्पन्नम् । हेतौ-हेतुना उक्तं निरुक्तम् । अवधारणे-निश्चयः । आदेशे-निर्देशः । अतिक्रमणे-अतिक्रान्तः कौशाम्ब्या निष्कौशाम्बिः । अभिनिःस्सरणे-अभिनिःसृतजिह्वः निर्जिह्वः ॥ ७ ॥

'दुर्' ईषदर्थे-कुत्सा-वैकृत-व्यृद्धि-कृच्छ्रा-प्रतिनन्दनानीप्सासु । ईषदर्थे-दुर्बलः दुर्गृहीतः । कुत्सायाम्-दुर्गन्धः दुरन्तः । वैकृते-दुर्वर्णः दुश्चर्म्मा । व्यृद्धौ-कम्बोजानां व्यृद्धिः दुष्कम्बोजम् । कृच्छ्रे-कृच्छ्रेण क्रियते दुष्करम् । अप्रतिनन्दने असम्यगुक्तं दुरुक्तम्, अनीप्सायाम्-अनीप्सितभगा दुर्भगा ॥ ८ ॥

'वि' नानार्था-पाया-त्यय-भय-दूर-भृशार्थ-कलहै-श्वर्य-वियोग-मोह-हर्ष-कुत्सा प्रादुर्भावानाभिमुख्या-नवस्थान-प्राधान्य भोजन-संज्ञा-दाक्ष्य-व्यय-कृत्स्नाप्तिषु । नानार्थे-नाना चित्रं विचित्रम् । अपाये-विदुःखः विशोकः । अत्यये-व्यभ्रं नभः, विहिमः कालः । भये विषण्णः, विभीतः । दूरे-विकृष्टोऽध्वा । भृशार्थे-भृशं रुद्धा विरुद्धा नद्यः, भृशं रौति विरौति । कलहे-विग्रहः विवादः । ऐश्वर्ये-विभुर्देशस्य । वियोगे-विपुत्रः विभूषणः विशिरस्कः । मोहेविचितः विमनाः । हर्षे-विस्मितमुखः । कुत्सायाम्-कुत्सिभङ्गं यस्य स व्यङ्गः, विरूपः । प्रादुर्भावे-प्रादुर्भूतो लोहितः विलोहितः अनाभिमुख्ये विमुखः । अनवस्थाने विभ्रान्तः । प्राधान्ये-विशिष्टः । भोजने विपक्वम् । संज्ञायाम्-विष्किरः शकुनि विकिरो वा । दाक्ष्ये-दक्षो विक्रान्तः । व्यये-शतं विनयते सहस्रं विनयते । व्याप्तौ कृत्स्नमस्याप्तं शरीरं दोषैर्व्याप्तम् ८॥

'आङ्' मर्यादा-प्राप्ति-स्पर्श-लिप्सा-भय-श्लेष-कृच्छ्रा-दिकर्म-ग्रहण-नीड-समीप-विक्रियार्हणा तृष्ण्या-शीः-स्वीकरणे-षदर्था-भिविधि-क्रियायोगा-न्तर्भाव-स्पर्द्धा-भिमु-

ख्यो-र्ध्वकर्म-भृशार्थ-प्रादुर्भाव-समवाय-स्मरण-विस्मय-प्रतिष्ठा-निर्देश-शक्त्यप्रसाद-विहतानुबन्ध-पुनर्वसनेषु । मर्यादायाम्-आपाटलिपुत्राद् वृष्टो मेघः । प्राप्तौ-आसादितः । स्पर्शे-आलिप्तः आलभते । लिप्सायाम्-आकाङ्क्षति । भये-आविग्नः । श्लेषे-आलिङ्गति । कृच्छ्रे-आपत् । आदिकर्मणि-आरब्धः कर्तुम् । ग्रहणे-आलम्बते यष्टिम् । नीडे-आवसथः आलयः, आवासः । समीपे-आसन्नो देवः । विक्रियायाम्-आवृक्तं सुवर्णम्, आक्रन्दति बालः । अर्हणे आमन्त्रितः । आवृत्तौ-आवृत्तो दिवसः । आशिषि-आयुराशास्ते, पुत्रमाशास्ते । स्वीकरणे-आदत्ते फलानि, आदत्ते रसान् सूर्यः । ईषदर्थे ईषत्कृतिराकृतिः, आताम्रः आच्छाया। अभिविधौ-आकुमारं यशः शाकटायनस्य । क्रियायोगे-आयोगः एष्टिः । अन्तर्भावे-आपानमुदकम् । स्पर्द्धायाम् आह्वयते मल्लो मल्लम् । आभिमुख्ये-आगच्छति । ऊर्ध्वकर्मणि-आरोहति वृक्षम् । भृशार्थे-आधूता शाखा, आपीनानीव धेनूनां जघनानि प्रसुस्नुवुः । प्रादुर्भावे-आपन्नसत्त्वा स्त्री । समवाये आसेदा आकुलम् । स्मरणे-आभवतु विज्ञानम् । विस्मये-आश्चर्यम् । प्रतिष्ठायाम्-आस्पदम् । निर्देशे-आदिष्टम् । शक्तौ-आधर्षति । अप्रसादे-आविलमुदकम् । विहते-आकाशम् । अनुबन्धे-आयाति । पुनर्वचने-आम्रेडितम् ॥ ९ ॥

'नि' लेश-राशि-भृशार्था-धोभाव-प्रसाद-संन्यासा-र्था-र्थगत्यादेश-दारकर्मोपदर्शन-केतनोपरमणा-वृत्ति-बन्धन-दर्शना-दर्शना-वसान--कौशला--सेवा--नियम--समीपान्तर्भाव-मोक्ष-तमस्तापसान्ना-श्रय ग्रहण वर्ण-वृक्षा भावातिशयेषु । लेशे-लेशेन हसति निहसति, निहासः । निघर्षः । राशौ-धान्यनिकरः, यवनिकरः । भृशार्थे-भृशं गृहीतः निगृहीतः । अधोभावे-अधः पतति निपतति । प्रसादे-प्रसन्नं पानं निपानं निगता आपः । संन्यासे-निक्षेपः निश्रेणी । अर्थे-निधानम् । अर्थगतौ-गतार्थानि वाचयानि निगतानि वाक्यानि । आदेशे-आदिष्टः कर्तुं नियुक्तः कर्तुम् । दारकर्म्मणि-निविशते । उपदर्शने-अर्थं निदर्शयति । केतने-निमन्त्रयते । उपरमणे-निवृत्तः पापात् । आवृत्तौ निवृत्तः सूर्यः । बन्धने निगलम् । दर्शने-निध्यायति, निशामयति । अवसाने-निष्ठितम्, नितिष्ठति । कौशले-विद्यासु निष्णातः निपुणः । आसेवायाम्-नियतः पन्थाः नियतो रथः । नियमे-नियमः । समीपे-निपार्श्वः । अन्तर्भावे निपीतमुदकं निहितं द्रव्यम् । मोक्षे-निसृष्टम् । तमसि निहारः । तापसान्ने-निहारो व्रीहिः । आश्रये-निलयः निवासः । ग्रहणे-निग्रहः । वर्णे-नीलः । वृक्षे-नीपः । अभावे-निद्रव्यः । अतिशये न्यूनः, निपीडितः ॥ १० ॥

'प्रति' पुनःक्रियाऽऽदान-सादृश्य-हनन-निर्यातन-तद्योग-विनिमया-भिमुख्य-वामदिग्योग व्याप्त्या-ध्यान-मात्रार्थ-संभावन-तत्त्वाख्या-भाग-लक्षण-वारण-संबन्ध-वीप्सा-व्याधिस्थानेषु । पुनःक्रियायाम्-पुनरुक्ते प्रत्युक्तम् । आदाने-प्रतिगृह्णाति, प्रतियाचते । सादृश्ये-प्रतिरूपकम् । हनने-प्रतिहतं पापम् । निर्यातने-प्रतिकृतं प्रतीकारः । तद्योगे-प्रतिपन्नः प्रेष्यः । विनिमये तैलार्थी घृतं प्रतिददाति । आभिमुख्ये-प्रत्यग्नि शलभाः पतन्ति । वामे-प्रतिलोमं करोति । दिग्योगे-प्रतीची दिक् । व्याप्तौ-प्रतीकीर्णं पुष्पैः । आध्याने-प्रतिवेदयति मन्त्रम् । मात्रार्थे-सूपप्रति । संभावने-प्रत्ययः प्रतिपत्तिः । तत्त्वाख्यायाम्-शोभनो देवदत्तो धर्मं प्रति । भागे यदत्र मां प्रति स्यात् । लक्षणे-वृक्षं प्रतिविद्योतते । वारणे-प्रतिषिद्धः । संबन्धे अक्षसम्बद्धं प्रत्यक्षम् । वीप्सायाम्-वृक्षं वृक्षं प्रतिसिञ्चति । व्याधौ-प्रतिश्यायः । स्थाने-प्रतिष्ठितः ॥ ११ ॥

'परि' ईषदर्थ-व्याप्त्यु-पर्यर्थ-भृश-सान्त्व-समन्ताद्भाव-भूषण-पूजा-समवाय-वर्जनालिङ्गननिवसन-शोक-भोजन-लङ्घन वीप्साऽवज्ञान-तत्त्वाख्या-स्पर्श लक्षणा-भ्यावृत्ति-नियमेषु । ईषदर्थे पर्यग्निकृतं परिपेषितम् । व्याप्तौ-परिगतोऽग्निः परिवातम् । उपर्यर्थे-परिपूर्णः परिधानम् । अभ्यासे-गत्वा गत्वा आगच्छति परिगच्छति । सान्त्वे-परिगृह्णाति । समन्ताद्भावे-परिधावति परिवृत्तम् । भूषणे-सुवर्णपरिष्कृतमासनम् । पूजायाम्-परिचरति । समवाये-परिषत् । परिस्तरः । वर्ज्जने-परित्रिगर्त्तेभ्यो वृष्टो देवः, वर्ज्जयित्वा स्नाति परिस्नाति । आलिङ्गने-परिष्वजते कन्यां माणवकः । निवसने-परिधत्ते वासः । शोके-कृतं परिदेवयते । भोजने-प्राघूर्णान् परिवेषयति । लङ्घने-परिस्कन्दति । वीप्सायाम् वृक्षं वृक्षं परिसिञ्चति । अवज्ञाने-परिभवति । तत्त्वाख्यायाम् परिसंख्यातम् । स्पर्शे परिपक्वम् । लक्षणे-देवलक्षणे परिज्ञातश्चारः । अभ्यावृत्तौ-परिवृतः संवत्सरः । नियमे-परिसमाप्तम् ॥ १२ ॥

'उप' वर्ज्जन-प्रतियत्न-वैकृत वाक्याध्याहार-लवन-परीक्षा-संपत्सर्पण-गुह्यागः--क्षयसामर्थ्या-चार्यकरण-सादृश्य-स्वीकरण-पीडा-मन्त्रक्रिया-व्याप्ति--दोषाख्यान-युक्ति-संज्ञा-पूर्व कर्म्म-पूजा-दान-सामीप्या-धिक-हीन-लिप्सासु । वर्ज्जने-उपवासः उपवसति अशनवर्जनं करोति । प्रतियत्ने-एधोदकस्योपस्कुरुते । वैकृते-उपस्कृतं भुङ्क्ते उपस्कृतं सहते । वाक्याध्याहारे-सोपस्कारं वाक्यमाह । लवने-उपस्कीर्य मद्रका लुनन्ति । परीक्षायाम्-उपेक्षितव्यम् । संपदि उपपन्नस्य उपपन्ना शरत्,

उपपन्नवाक्यः साधुः । सर्पणे-उपसर्पति उपतिष्ठते कर्मकरः । गुह्ये-उपह्वरः उपांशुः उपगूर्णम् । आगसि-उपालम्भः उपाघातः । क्षये-उपक्षीणः उपयुक्तं द्रव्यम् । सामर्थ्ये उपचितः । आचार्यकरणे उपदिशति उपाध्यायः । सादृश्ये-उपमानम् । स्वीकरणे-उपगृह्णाति । पीडायाम्-स्तनोपपीडं शेते उपपीडितः । मन्त्रक्रियायाम्-उपनयते उपनयनम् । व्याप्तौ-उपकीर्णं सर्वतः । दोषाख्याने-उपघातः । युक्तौ-लवणोपसृष्टं देवोपसृष्टम् । संज्ञायाम्-उपधा उपसर्गः । पूर्वकर्मणि-उपक्रय उपकारः । पूजायाम् उपतिष्ठते देवम् उपस्थानम् उपचारः । दाने-उपहरत्यर्थम्, बलिमुपहरेत् । सामीप्ये-उपकुम्भम् उपमणिकम् । अधिके-उपखार्यां द्रोणः । हीने-उपार्ज्जुनं योद्धारः । लिप्सायाम्-उपयाचते उपसादितोऽर्थः ॥ १३ ॥

'अधि' अधिकारा-धिष्ठान-पाठो-पर्यैश्वर्य-बाधनाधिक्य-स्मरण-सहयोग स्ववशतासु । अधिकारे-अधिकारो राज्ञः,अधिकृतो ग्रामे । अधिष्ठाने मय्यधिष्ठितं अध्यात्मं कथा वर्तते । पाठे-अधीतं व्याकरणम् । उपर्यर्थे अधिरोहति, अधिक्रान्तम् । ऐश्वर्ये-अधिपतिर्देशस्य, अधिश्रेणिके मगधाः । बाधने-अधिकुरुते शत्रून् । आधिक्ये-अधिखार्यां द्रोणः । स्मरणे-मातुरध्येति, पितुरध्येति । सहयोगे—अधिवसति । स्ववशतायाम् आत्माधीनः ॥ १४ ॥

'अपि' पदार्थानुवृत्त्यपेक्षा-समुच्चयान्ववसर्ग-गर्हा-शीः-संभावन-भूषण-संवरण-प्रश्नावमर्षेषु । पदार्थे-सर्पिषोपि स्यात्, सर्पिषो मात्रापि स्यादित्यर्थः । अनुवृत्तौ अपि मा योजय ! अपेक्षायाम्-अयमपि विद्वान् । समुच्चये-अपि सिञ्च अपि स्तुहि अन्ववसर्गे-भवानऽपि च्छत्रं गृह्णातु । गर्हायाम्-अपि तत्र भवान् सावद्यं सेवते । आशिषि-अपि मे स्वस्ति पुत्राय अपि शिवं गोभ्यः । संभावने-अपि पर्वतं शिरसा भिन्द्यात् । भूषणे—अपि नह्यति हारम् । संवरणे—अपिहितं द्वारम् । प्रश्ने अपि कुशलम्, अपि गच्छामि । अवमर्षे—अपि भज्येय न नमेयम्, अपि काकः श्येनायते ॥ १५ ॥

सु पूजा-भृशार्थानुमति-समृद्धि-दृढाऽऽख्याऽकृच्छ्रेषु । पूजायाम्-पूजितो राजा सुराजा, सुगौः । भृशार्थे-सुसुप्तं सुषिक्तम् । अनुमतौ-सुकृतं सूक्तं सुदत्तम् । समृद्धौ समृद्धो देशः सुमगधं वर्तते, सुभद्रं वर्तते । दृढाख्यायाम्-सुबद्धं सुकृतम् । अकृच्छ्रे सुकरः कटो भवता ॥ १६ ॥

उत् प्राबल्य-संभव-लाभोर्ध्वकर्म-प्रकाशास्वस्थ-मोक्ष-दृश्य-समृद्धयत्ययान्याय-प्राधान्य-शक्त्यवरपर-दिग्योग-निर्देशेषु । प्राबल्ये-उद्बला-मूषिका. उद्गलं याति ।

संभवे-उद्गतो दर्पो नीचस्य । लाभे-उत्पन्नं द्रव्यम्, उदपादि भैक्षम् । ऊर्ध्वकर्मणि-आसनादुत्तिष्ठति । प्रकाशे-प्रकाशं चरति उच्चरति, उद्भवति । अस्वस्थे-उत्सुकः, उच्चितः, उन्मत्तः । मोक्षे उत्सृष्टः । दृश्ये-उत्सवः उद्यानम् । समृद्धौ-उत्थितं कुटुम्बम् । अत्यये अतीतमेघं नभ उन्मेघम् । अन्याये-उत्कुरुते कन्याम्, उत्कुरुते परदारान् । प्राधान्ये-उत्कृष्टोऽश्वः, उत्तमं कुलम् । शक्तौ-उत्सहते गन्तुम् । अत्र्यपरे उत्तरः । दिग्योगे उदीची दिक् । निर्देशे-उद्दिशति उद्देशः ॥ १७ ॥

अति पूजा—भृशार्थानुमत्यतिक्रमण समृद्धि-भूताभावावज्ञान-हीनार्थेषु । पूजायाम्-पूजितो राजा अतिराजा, अतिगौः । भृशार्थे अतिकृतम्, अतीसारः, अतिवृष्टिः । अनुमतौ-अतिचिन्तितम् । अतिक्रमणे-अतिक्रान्तोऽन्यान् स्थानतिरथः, अतिरि कुलम् । समृद्धौ-समृद्धो देशः अतिदेशः । भूताभावे-अतीतमेघं नभः । अवज्ञाने-अतिच्छिनत्ति, अतिहूतं धान्यम् । हीनार्थे-हीनं वाहयति अतिवाहयति ॥ १८ ॥

अभि आभिमुख्य-संनिकृष्ट-वशीकरणोर्ध्वकर्म-पूजा-कुल-सान्त्व-व्याप्तीच्छा दोषोल्वण-रूप-वचन-लक्ष्य-वीप्सा-नव-प्रणयेषु । आभिमुख्ये-अभितः । वशीकरणे अभिचरति मन्त्रैर्माणवकः कन्याम् । ऊर्ध्वकर्मणि-अभिरोहति वृक्षम् । पूजायाम्-अभिवादये । कुले-अभिजातो माणवकः । सान्त्वे-अभिमन्यते कन्याम् । व्याप्तौ-अभिकीर्णाः पांशुभिः । इच्छायाम्-अभिलषति मैथुनम् । दोषोल्वणे-अभिस्यन्दः । रूपे-अभिरूपो माणवकः । वचने-अभिधेयः साधुः । लक्ष्ये-अभिविध्यति । वीप्सायाम्-वृक्षं वृक्षमभिसिञ्चति । नवे-अभिनवं माल्यम् । प्रणये-अभिमन्त्रितोऽग्निः ॥ १९ ॥

## ॥ इति प्रादीनामर्थनिदर्शनम् ॥



# ॥ अथ विभक्तिप्रयोगविभागः ॥

पुरा. तदा. अथ यावद् ह शश्वदादियोगेऽद्यतनीह्यस्तनोपरोक्षावर्तमानाश्चतस्रो विभक्तयः ॥ यथा अवात्सुरिह पुराच्छात्राः अवसन् ऊषुः, वसन्ति वा ॥ तदाऽभाषिष्ट राघवः अभाषत, बभाषे, भाषते वा ॥ अथावोचन्महेश्वरः अब्रवीत्, उवाच आह वा ॥ यावद्गिरः खे अचारिषुः, अचरन् चेरुः, चरन्ति वा ॥ इति हाकार्षीत् अकरोत् चकार करोति वा ॥ शश्वदकार्षीत् अकरोत् चकार करोति वा ॥

स्मेन सहिते पुरादौ तु वर्तमानैव ॥ यथा नटेन स्म पुराऽधीयते ॥ इतिह स्मोपाध्यायः कथयति ( हशब्दोऽत्र स्मृत्यर्थे ) शश्वदधीते स्म बटुः ॥

ननावुपपदे पृष्टस्य प्रतिवचने भूतेऽर्थे वर्तमाना यथा किमकार्षीश्चैत्र कटम् ? ननु करोमि भोः ॥ ननु शब्दयोर्योगे भूतेऽर्थे वा वर्तमाना ( लट् ) अपाठीः किम् ? न पठामि नापाठिषम् ॥ कस्तत्रावोचत् ? अहं नु ब्रवीमि अवोचम् वा ॥ पुरा यावतोरुपपदयोर्भविष्यति वर्तमाना—यथा सत्वरं पुस्तकं गृहाण पुरा-अध्यापक आगच्छति ॥ अयं यावद् भुङ्क्ते तावत् प्रतीक्षस्व ॥

परिमाणार्थे तु न भवति यावद्दास्यते तावद्भोक्ष्यते ॥ ( यत्परिमाणमित्यर्थः ) कदा कर्ह्योर्योगे भविष्यति काले वा वर्तमाना (लट्) यथा कदा भुङ्क्ते, भोक्ष्यते, भोक्ता वा ॥ एवं कर्हि भुङ्क्ते भोक्षते भोक्ता वा ॥ भूते तु नित्यं परोक्षादयः ॥ कदा बुभुजे-इत्यादि ॥

विभक्त्यन्ते डतरडतमान्ते च किंवृत्ते ( किंशब्दनिष्पन्ने ) उपपदे प्रष्टुर्लब्धुमिच्छायां गम्यायां वर्त्स्यति ( भविष्यति ) वा वर्तमाना यथा—

कम्-कतरम्-कतमं वा भोजयसि-भोजयिष्यसि, भोजयितासि वा ॥

लब्धुमिष्यमाणान्तादेः स्वर्गाद्यवाप्तिलक्षणसिद्धौ गम्यायां वर्त्स्यति वा वर्तमाना ॥ यथा यो भिक्षां ददाति, दास्यति, दाता वा स स्वर्गं याति-यास्यति याता वा ॥ प्रैषानुज्ञावसराणाम् ( न्यक्कारपूर्वप्रेरणाकामचारानुमतिकर्तव्यकालप्राप्तीनाम् ) हेतौ वर्त्स्यति वा. वर्तमाना ॥ उपाध्यायश्चेदागच्छति आगमिष्यति आगन्ता वा, अथ त्वं सूत्रमधीष्व ॥ अत्रोपाध्यायागमनं प्रैषादेर्हेतुर्भवति ॥

ऊर्ध्वमौहूर्तिके (मुहूर्तादुपरितने, प्रैषादिहेतौ वर्त्स्यति सप्तमीवर्तमाने वा॥यथा-मुहूर्ताद् ऊर्ध्वं-परम्-उपरि,वा-उपाध्यायश्चेदा-गच्छेत् आगच्छति, आगमिष्यति,

आगन्ता वा अथ त्वं तर्कमधीष्व ॥ वर्तमानसमीपे भूते भविष्यति चार्थे वर्तमाना वा ॥ यथा कदागतोऽसि ? अयमागच्छामि अयमागमम् कदा मैत्र गमिष्यति । एष गच्छामि, गमिष्यामि वा ॥ अनागतः प्रियोऽर्थः प्राप्तुमिष्यमाण आशंस्यः तस्मिन्नर्थे भूतवत् सद्वच्च प्रत्ययाः भवन्ति–यथा देवश्चेदवर्षीत्–वर्षति वर्षिष्यति वा, धान्यमवाप्स्म वपामः वप्स्यामो वा॥ सामान्यातिदेशे विशेषस्यानतिदेशाद् ह्यस्तनी-परोक्षे न भवतः । अपिजात्वोरुपपदयोर्गर्हायां गम्यायां सर्वेषु कालेषु वर्तमाना ॥ यथा अपि तत्र भवान् जन्तून् हिनस्ति जातु तत्र भवान् अनृतं भाषते, धिग्गर्हामहे॥ ( अत्रापि जातुशब्दौ गर्हाद्योतकौ ) कथमित्युपपदे गर्हायां गम्यायां सर्वेषु कालेषु सप्तमीवर्तमाने वा भवतः ॥ सप्तमी ( लिङ् ) वर्तमाना ( लट् ) कथं धर्मं त्यजेः त्यजसि वा, धिग्गर्हामहे ॥ पक्षे ह्यस्तन्यादय आशीर्वर्जाः सर्वा अपि–कथं धर्म-मत्यजः, अत्याक्षीः, तत्यजिथ, त्यक्तासि, त्यक्ष्यसि ॥ सप्तमीनिमित्तमस्तीति भूते क्रियातिपतने वा क्रियातिपत्तिः, कथं धर्ममत्यक्ष्यः ॥ भविष्यति तु नित्यं क्रियातिपत्तिः–कथं नाम तत्र भवान् धर्ममत्यक्ष्यत् ॥

## अथ सप्तमी.

( विधिनिमन्त्रणाधीष्टसम्प्रश्नप्रार्थने ) विध्यादिविशिष्टेषु प्रत्ययार्थेषु धातोः सप्तमीपञ्चम्यौ–( लिङ् लोटौ ) भवतः ॥ विधिरप्राप्ते नियोगः क्रियायां प्रेरणे-त्यर्थः ।। अज्ञातज्ञापनमित्येके ॥ प्राणिनो न हिंस्यात् न हिनस्तु भवान्॥ प्रेरणा-यामेव यस्यां प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम् इच्छामन्तरेणापि नियोगतः कर्तव्यमिति यावत् ॥ द्विसन्ध्यमावश्यकं कुर्यात्, करोतु भवान् ॥ यत्र प्रेरणा-यामेव प्रत्याख्याने कामचारस्तदामन्त्रणम् ॥ इहासीत, आस्तां भवान्, यदि रोचते ॥ प्रेरणैव सत्कारपूर्विकाऽधीष्टम् ॥ तत्त्वज्ञानं नः प्रसीदेयुः, प्रसीदन्तु वा गुरुपादाः ॥ तत्त्वज्ञानं कर्मतापन्नं–नोऽस्मभ्यं प्रसादपूर्वकं दधुरित्यर्थः॥ अथवा तत्त्वज्ञानं क्रियाविशेषणम् ॥ सम्प्रश्नः सम्प्रधारणा ॥ किं नु खलु भो व्याकरण-मधीयीय, अध्ययै, उत सिद्धान्तम् ॥ प्रार्थनं याञ्चा ॥ भो भोजनं लभेय, लभै, वा ॥ सामर्थ्यविषये सम्भावने ( श्रद्धाने ) गम्ये अलमर्थस्यानुक्तौ सप्तमी ( लिङ् ) ( सर्वविभक्त्यपवादः ) शक्यसम्भावने अपि मासमुपवसेत् ॥ प्रायेणायं मासमुपवस्तुं समर्थः, इत्यर्थः, ॥ अशक्यसम्भावने अपि शिरसा पर्वतं भिन्द्यात् ॥ प्रायेण पर्वतं भेत्तुमयं समर्थ इत्यर्थः ॥ अत्र सप्तमीनिमित्तमस्तीति भूते भविष्यति च क्रियातिपतने क्रियातिपत्तिः अपि पर्वतं शिरसाऽभेत्स्यत् ॥

अलमर्थोक्तौ तु न शक्तश्चैत्रो धर्मं करिष्यति ॥ किंवृत्ते उपपदे क्षेपे (गर्हायाम्) गम्ये सप्तमी भविष्यन्त्यौ ( लिङ्लृटौ ) ॥ सर्वविभक्त्यपवादः ॥ कः कतरः कतमो वा प्रभुं निन्देत्, निन्दिष्यति वा ॥ अत्रापि पूर्ववत् क्रियातिपत्तिः ॥ किं तत्र भवाननृतमवक्ष्यत् । पक्षे ब्रूयात् वक्ष्यति । भविष्यति तु नित्यं क्रियातिपत्तिः ॥ अकिंवृत्ते किंवृत्ते चोपपदे अश्रद्धामर्षयोर्गम्ययोः सप्तमीभविष्यन्त्यौ ॥ ( अश्रद्धा—असम्भावना, अमर्षोऽक्षमा ) सर्वविभक्त्यपवादः न श्रद्दधे, न सम्भावयामि वा तत्र भवानदत्तमाददीत, आदास्यते वा ॥ न श्रद्दधे नावकल्पयामि वा किमत्र भवान् गुरुं नाद्रियेत, आदरिष्यते वा ॥ न मर्षयामि, न क्षमे—तत्र भवान् हरिं गर्हेत, गर्हिष्यते वा ॥ अत्रापि क्रियातिपत्तिः पूर्ववत् ॥ जातु यद् यदा यदि—इत्येतेषूपपदेषु अश्रद्धामर्षयोर्गम्यमानयोर्धातोः सप्तमी ( लिङ् ) भविष्यन्त्यपवादः न श्रद्दधे न क्षमे वा जातु, यद् यदा यदि वा त्वादृशः सुरां पिबेत् ( जात्वादिशब्दाः अश्रद्धामर्षद्योतकाः ) अत्रापि भूते क्रियातिपतने वा क्रियातिपत्तिः न श्रद्दधे न क्षमे वा जातु, यद्, यदा, यदि वा तत्र भवान् सुरामपास्यत् पक्षे पिबेत् । भविष्यति तु नित्यं क्रियातिपत्तिः। क्षिप्रार्थे—आशंसार्थे चोपपदे—आशंस्येऽर्थे—वर्तमानाद्धातोर्यथासंख्यं भविष्यन्तीसप्तम्यौ ( भूतवच्चेत्यस्यापवादः ) उपाध्यायश्चेदागच्छति, आगमत्, आगमिष्यति वा क्षिप्रमाशुत्वरितं शीघ्रं वा सिद्धान्तम् अध्येष्यामहे ॥ श्वस्तनीविषयेऽप्येतद्वचनबलाद्भविष्यन्त्येव ॥ वृष्टिश्चेच्छ्वः शीघ्रमागमिष्यति, श्वःशीघ्रं वप्स्यामः ॥ गुरुश्चेदुपैति, उपागात्, उपैष्यति, उपैता वा आशंसे, अवकल्पये, संभावये वा युक्तोऽधीयीय ॥ द्वयोस्तूपपदयोः सप्तम्येव ( लिङेव ) आशंसे क्षिप्रमधीयीय ॥ हेतुभूते फलभूते च वत्स्र्यति सप्तमी वा ॥ यदि गुरुमुपासीत शास्त्रान्तं गच्छेत्, यदि गुरुमुपासिष्यते शास्त्रान्तं गमिष्यति ॥ ( अत्र ) गुरूपासनं हेतुः शास्त्रान्तगमनं फलम् ) भविष्यति क्रियातिपतने क्रियातिपत्तिः ॥ दक्षिणेन चेदयास्यन्न शकटं पर्याभविष्यत् ॥ हनिष्यतीति पलायिष्यते—इत्यत्र हेतु फलभावस्येति शब्देन द्योतितत्वान्न सप्तमी ॥ वर्तमानेऽर्थे—इच्छार्थाद्धातोः सप्तमी ( लिङ् ) वा भवति ॥ पक्षे वर्तमाना ( लट् ) ॥ चैत्रः सुखम्—इच्छेत्, इच्छति, उश्यात्, वष्टि कामयेत, कामयते वा क्षेपेऽपि जात्वोर्वर्तमाना, इत्यादावपि परत्वादयमेव विकल्पः ॥ अपि संयतस्सन्नकल्प्यं सेवितुमिच्छेत्, इच्छति वा, धिग्गर्हामहे ॥ इच्छार्थे धातावुपपदे प्रयोक्तुः कामोक्तौ गम्यायां ॥ सप्तमीपञ्चम्यौ ( लिङ्लोटौ ) अश्रद्धामर्षयोर्गर्हायाम् आश्चर्ये च

गम्ये यच्च यत्र शब्दयोरुपपदयोः सप्तमी ( लिङ् ) न श्रद्दधे न क्षमे वा यच्च यत्र वा त्वमेवं कुर्याः ॥ ( अत्र यच्च यत्र शब्दौ-अश्रद्धामर्षद्योतकौ ) यच्च यत्र वा तत्र भवानस्मानाक्रोशेत् धिग्गर्हामहे ॥ आश्चर्यं यच्च यत्र वा तत्र भवानकल्प्यं सेवेत ॥ शक्तेऽर्हे च कर्तरि गम्यमाने सप्तमी ॥ त्वं भारं वहेः ॥ ( वोढुं शक्त इत्यर्थः ) त्वं कन्यां वहेः । ( कन्यां वोढुं योग्य इत्यर्थः ) यच्छब्दप्रयोगे, कालादिपूपपदेषु सप्तमी ॥ कालः समये वेला वा यदधीयेत भवान् ॥ ( भवत्कर्तृकं यदध्ययनं तस्य काल इत्यर्थः) इच्छामि भुञ्जीत भुङ्क्तां वा भवान् ॥ अवसरः (प्राप्तकालता) तस्मिन् पञ्चमी ॥ अथ त्वं कुरु ॥ ( तव कर्तुमवसर इत्यर्थः ) भृशत्वाभीक्ष्ण्य-विशिष्टसर्वकालेऽर्थे धातोः सर्वविभक्तिसर्ववचनविषये पञ्चम्या हि स्वौ स्तः, यत एव धातोर्यस्मिन्नेव कारके हि स्वौ विधीयेते तत्रैव धातोस्तत्कारकविशिष्टस्यैव सम्बन्धेऽनुप्रयोगे सति ॥ तथा तध्वमौ बहुत्वविशिष्टे युष्मदि अभिधेये भवतः-हि स्वौ च यथाविधिधातोः सम्बन्धे ॥ लुनीहि लुनीहीत्येवायं लुनाति ॥ भृशं पुनः पुनर्वा लुनातीत्यर्थः ॥ ( गुणक्रियाणां क्रियान्तरैरव्यवहितानां साकल्यं फलातिरेको वा भृशत्वम् । प्रधानक्रियायाः क्रियान्तरैरव्यवहितायाः पौनः पुन्यम् आभीक्ष्ण्यम् ) ( प्रयोगे इति शब्दः सम्बन्धोपादानार्थः ) समुच्चये गम्ये सामान्यार्थस्य धातोः सम्बन्धे सति हिस्वौ बहुत्वविशिष्टे युष्मदि अभिधेये तध्वमौ च वा भवतः व्रीहीन् वप, लुनीहि, पुनीहीत्येव यतते ॥ पक्षे वपति लुनाति पुनातीत्येव यतते ॥ उभयतः सार्द्धरात्रमहरद्यतनकालः तस्मिन्नसति भूतेऽर्थे ह्यस्तनी ( लङ् ) अकरोत् ॥ हशश्वद्योगे पञ्चवर्षमध्यमप्रच्ये च भूतानद्यतने परोक्षेऽर्थे ह्यस्तनी परोक्षा-( लिट् ) च इति ह-अकरोत्-चकार वा ॥ शश्वदकरोत्-चकार वा ॥ आगच्छत्किम् ? जगाम किम् ? भूतानद्यतने परोक्षे परोक्षत्वेनाविवक्षिते ह्यस्तनी ॥ अभवत् सगरो राजा ॥ भूतेऽर्थेऽद्यतनी (लुङ्) अकार्षीत्-तपः ॥ विशेषस्याविवक्षायां व्यामिश्रणे च सति भूतेऽद्यतनी ॥ अपाम पयः ॥ रामो वनमगमत् ॥ अद्य श्वो वा अभुक्ष्महि ॥ माङ्युपपदे अद्यतनी । माकार्षीद्धर्मम् ॥ मा कुरु, इत्यादिप्रयोगाः स्वमतेऽसाधवः ॥ मतान्तरे तु साधवः-अङितो माशब्दप्रयोगात् ॥ स्मसहिते माङि उपपदे ह्यस्तनी अद्यतनी च ॥ मास्म करोत्, कार्षीद् वा ॥ ( अत्र माशब्देन निषेध उच्यते, स्मशब्देन स एव द्योत्यते ) संभावनम्-( हेतोः शक्तिश्रद्धानम् ) तस्मिन् विषये असिद्धेऽपि वस्तुनि सिद्धवत् प्रत्ययाः ॥ संभवे चेत्प्रयत्नोऽभूदुदभूवन् विभूतयः ॥ भूतानद्यतने परोक्षेऽर्थे परोक्षा- लिट्)

जघान कंसं कृष्णः ॥ कृतस्यापि व्यापारस्यास्मरणे, अत्यन्तनिह्नवे वा भूतेऽनद्यतनेऽर्थे परोक्षा ॥ सुप्तोऽहं किल विललाप ॥ कलिङ्गेषु त्वया ब्राह्मणो हतः इति पृष्ट आह-नाहं कलिङ्गान् जगाम इति ॥ आशिषि आशी पञ्चम्यौ ॥ जीयात्, जयतात् ॥ अनद्यतने भविष्यति श्वस्तनी- लुट् ) भवति श्वः कर्ता ॥ अद्य श्वो वा गमिष्यतीत्यत्र न भवति अनद्यतनग्रहणात् । श्वो गमिष्यतीत्यादि तु, पश्चात्-श्वः शब्देन योगात्साधु ॥ परिदेवने ( अनुशोचने ) गम्ये भविष्यति श्वस्तनी ॥ इयन्तु कदा गन्ता यैवं पादौ निदधाति ॥ धात्वर्थस्य सातत्ये सजातीयकालकृत सामीप्ये च गम्ये ह्यस्तनीश्वस्तन्यौ न भवतः ॥ यावज्जीवमन्नमदाद्दास्यति वा ॥ येयं पौर्णमास्यतिक्रान्ता तस्यां प्रद्युम्नमहः प्रावर्तिष्ट । येयममावास्यागामिनी तस्यामग्नीनाधास्यते ॥ देशस्यावधावुपपदे देशस्यैवार्वाग् एष्यति श्वस्तनी न भवति ॥ योऽयमध्वा गन्तव्य आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र द्विर्भोक्ष्यामहे ॥ कालस्यावधावुपपदे कालस्यैवार्वाग्भागे एष्यत्यर्थे श्वस्तनी न भवति सोऽर्वाग्भागोऽहोरात्राणां सम्बन्धी न चेत् ॥ योऽयमागामी संवत्सरस्तस्य यदवरमाग्रहाण्यास्तत्र युक्ता अध्येष्यामहे ॥ अहोरात्रप्रयोगे तु योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्राध्येतास्महे ॥ कालस्यावधौ कालस्यैव परस्मिन् भागे एष्यति श्वस्तनी भविष्यन्ती च। आगामिनः संवत्सरस्य आग्रहाण्याः परस्ताद्द्विःसूत्रमध्येष्यामहे, अध्येतास्महे वा ॥ कालादन्यस्य परभागे तु आशत्रुञ्जयाद्गन्तव्येऽस्मिन्नध्वनि वलभ्याः परस्ताद्द्विरोदनं भोक्तास्महे यच्छब्दाप्रयोगे, स्मृत्यर्थे उपपदे भूतानद्यतनेऽर्थे भविष्यन्ती ( लृट् ) स्मरसि साधो स्वर्गे स्थास्यामः ॥ यच्छब्दप्रयोगे तु ह्यस्तनी-अभिजानासि कृष्ण यद्वने, अभुञ्ज्महि ॥ स्मृत्यर्थे उपपदे यद्यदि वा प्रयुज्यमाने प्रयोक्तुः क्रियान्तराकाङ्क्षायां सत्यां भूतानद्यतने वा भविष्यन्ती ॥ पक्षे ह्यस्तनी ॥ स्मरसि मित्र कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे स्मरसि मित्र कश्मीरेष्ववसाम तत्रौदनमभुञ्ज्महि । स्मरसि मित्र यत् कश्मीरेषु वत्स्यामः, अवसाम वा यत्तत्रौदनं भोक्ष्यामहे अभुञ्ज्महि वा ॥ ( अत्र वासो लक्षणं भोजनं लक्ष्यमिति लक्ष्यलक्षणयोः सम्बन्धे प्रयोक्तुराकाङ्क्षा भवति )

आश्चर्ये गम्ये यच्च यत्राभ्यामन्यस्मिन्नुपपदे यदिशब्दाप्रयोगे भविष्यन्ती ( सर्वविभक्त्यपवादः आश्चर्यमन्धो नामकृष्णं द्रक्ष्यति ॥ यदि प्रयोगे तु चित्रं यदि मूकोऽधीयीत ॥ ( अत्र जातु यद्यदा, इति सप्तमी ) किंकिलेति शब्दे अस्त्यर्थे चोपपदेऽश्रद्धामर्षयोर्गम्ययोर्भविष्यन्ती ॥ न श्रद्दधे न मर्षयामि वा किं किल त्वशूद्रान्नं भोक्ष्यसे ॥ ( किं किलेति समुदायः क्रोधद्योतकः ) अस्त्यर्थाः–अस्ति भवतिविद्यतयः ॥ न श्रद्दधे न मर्षये वा अस्ति भवति विद्यते वा परदारान् गमिष्यसि ॥ ( अत्र परदारान् गमिष्यसीत्यस्ति इत्यन्वयः ) हेतुफलकथनादिका सामग्री सप्तम्या अर्थः ( निमित्तम् ) तत्र भविष्यत्यर्थे धातोः कुतश्चिद्वैगुण्यात् क्रियायाः अनभिनिर्वृत्तौ सत्यां क्रियातिपत्तिः ( लृङ् ) भवति, स यदि गुरुनुपासिष्यत शास्त्रान्तमगमिष्यत् ॥ दक्षिणेन चेदयास्यः न शकटं पर्याभविष्यत् ॥ अगुरूपसनं दक्षिणगमनञ्च हेतुः शास्त्रान्तगमनमपर्याभवनञ्च फलम् ) क्रियाया अनिष्पत्तौ सत्यां सप्तम्यर्थे भूते क्रियातिपत्तिः ॥ यद्ययं धनमदास्यत् ततो विश्वेऽपि यशः प्रासरिष्यत् ॥

॥ इति विभक्तिप्रयोगविभागः ॥



| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | यप् | तुम् |
|---|---|---|---|---|---|---|---|
| चिन्त | चिन्तित | चिन्तितवत् | चिन्तयत् | चिन्तयमान | चिन्तयित्वा | सञ्चिन्त्य | चिन्तयितुम् |
| चुद् | चोदित | चोदितवत् | चोदयत् | चोदयमान | चोदयित्वा | सचोद्य | चोदयितुम् |
| चुर् | चोरित | चोरितवत् | चोरयत् | चोरयमाण | चोरयित्वा | सञ्चोर्य | चोरयितुम् |
| छम् | छान्त | छान्तवत् | छमत् | | छमित्वा छान्त्वा | आछम्य | छमितुम् |
| छिद् | छिन्न | छिन्नवत् | छिन्दन् | छिन्दान | छित्वा | प्रच्छिद्य | छेत्तुम् |
| जन् | जात | जातवत् | | जायमान | जनित्वा | सञ्जन्य | जनितुम् |
| जप् | जपित | जपितवत् | जपत् | | जपित्वा | प्रजप्य | जपितुम् |
| जल्प् | जल्पित | जल्पितवत् | जल्पत् | | जल्पित्वा | प्रजल्प्य | जल्पितुम् |
| जागृ | जागरित | जागरितवत् | जाग्रत् | | जागरित्वा | प्रतिजागर्य | जागरितुम् |
| जि | जित | जितवत् | जयत् | विजयमान | जित्वा | विजित्य | जेतुम् |
| जीव | जीवित | जीवितवत् | जीवत् | | जीवित्वा | सञ्जीव्य | जीवितुम् |
| ज्ञा | ज्ञात | ज्ञातवत् | जानत् | जानान | ज्ञात्वा | विज्ञाय | ज्ञातुम् |
| झट | झटित | झटितवत् | झटत् | | झटित्वा | प्रझट्य | झटितुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | यप् | तुम् |
|---|---|---|---|---|---|---|---|
| कम्प् | कम्पित | कम्पितवत् | कम्पयत् | ... | कम्पयित्वा | प्रकम्प्य | कम्पयितुम् |
| कृ | कृत | कृतवत् | कुर्वत् | कुर्वाण | कृत्वा | संस्कृत्य | कर्तुम् |
| कॄत् | कीर्ण | कीर्णवत् | किरत् | ... | कीर्त्वा | विकीर्य | करीतुम् करितुम् |
| कॄ | कीर्ण | कीर्णवत् | कृणत् | ... | कीर्त्वा | विकीर्य | ” |
| क्री | क्रीत | क्रीतवत् | क्रीणत् | क्रीणान | क्रीत्वा | विक्रीय | विक्रेतुम् |
| क्री | क्रीडित | क्रीडितवत् | क्रीडत् | ... | क्रीडित्वा | संक्रीड्य | क्रीडितुम् |
| क्षल् | क्षालित | क्षालितवत् | क्षालयत् | क्षालयमान | क्षालयित्वा | प्रक्षाल्य | क्षालयितुम् |
| क्षिप् | क्षिप्त | क्षिप्तवत् | क्षिपत् | | क्षिप्त्वा | प्रक्षिप्य | क्षेप्तुम् |
| क्षुद् | क्षुण्ण | क्षुण्णवत् | क्षुन्दत् | क्षुन्दान | क्षुत्वा | संक्षुद्य | क्षोत्तुम् |
| क्षुभ् | क्षुभित | क्षुभितवत् | क्षुभ्नत् | | क्षुभित्वा क्षोभित्वा | प्रक्षुभ्य | क्षोभितुम् |
| खन् | खात | खातवत् | खनत् | | खात्वा, खनित्वा | प्रखन्य | खनितुम् |
| खिद् | खिन्न | खिन्नवत् | | खिन्दान | खित्वा | संखिद्य | खेत्तुम् |
| गज | गजित | गजितवत् | गजत् | | गजित्वा | प्रगज्य | गजितुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | ल्यप् | तुम् |
|---|---|---|---|---|---|---|---|
| गण् | गणित | गणितवत् | गणयत् | गणयमान | गणयित्वा | विगणय्य | गणयितुम् |
| गद् | गदित | गदितवत् | गदत् | | गदित्वा | अनुगद्य | गदितुम् |
| गम् | गत | गतवत् | गच्छत् | | गत्वा | आगम्य आगत्य | आगन्तुम् |
| गल् | गलित | गलितवत् | गलत् | | गलित्वा | निगल्य | गलितुम् |
| गल्भ् | गल्भित | गल्भितवत् | | गल्भमान | गल्भित्वा | प्रगल्भ्य | गल्भितुम् |
| गॄ | गीर्ण | गीर्णवत् | गिरत् | | गीर्त्वा | निगीर्य | गरीतुम् गरितुम् |
| ग्रन्थ् | ग्रथित | ग्रथितवत् | ग्रथ्नत् | | ग्रथित्वा | सङ्ग्रथ्य | ग्रन्थितुम् |
| ग्रह् | गृहीत | गृहीतवत् | गृह्णत् | गृह्णान | गृहीत्वा | निगृह्य | ग्रहीतुम् |
| गन्ध | गन्धित | गन्धितवत् | गन्धयत् | | गन्धित्वा | प्रगन्ध्य | गन्धितुम् |
| घ्रा | घ्रात, घ्राण | घ्रातवत् घ्राणवत् | जिघ्रत् | | घ्रात्वा | आघ्राय | घ्रातुम् |
| चर् | चरित | चरितवत् | चरत् | | चरित्वा | आचर्य | चरितुम् |
| चल् | चलित | चलितवत् | चलत् | | चलित्वा | सञ्चल्य | चलितुम् |
| चि | चित | चितवत् | चिन्वत् | चिन्वान | चित्वा | प्रचित्य | चेतुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | यप् | तुम् |
|---|---|---|---|---|---|---|---|
| इ | इत | इतवत् | यत् | | इत्वा | उपेत्य | एतुम् |
| अधि इ | अधीत | अधीतवत् | | अधीयान | | अधीत्य | अध्येतुम् |
| इन्ध् | इद्ध | इद्धवत् | | इन्धान | इन्धित्वा | समिध्य | इन्धितुम् |
| इष् | इष्ट | इष्टवत् | इच्छत् | | एषित्वा, इष्ट्वा | प्रेष्य | एषितुं, एष्टुम् |
| ईर् | ईरित | ईरितवत् | ईरयत् | ईरयमाण | ईरयित्वा | प्रेर्य | ईरयितुम् |
| उज्झ् | उज्झित | उज्झितवत् | उज्झत् | | उज्झित्वा | प्रोज्झ्य | उज्झितुम् |
| उभ् | उभित | उभितवत् | उभत् | | ओभित्वा | समुभ्य | ओभितुम् |
| उष | उषित | उषितवत् | उषत् | | ओषित्वा | प्रोष्य | ओषितुम् |
| ऊह् | ऊहित | ऊहितवत् | समूहत् | समूहमान | ऊहित्वा | समुह्य | ऊहितुम् |
| ऋच् | ऋचित | ऋचितवत् | ऋचत् | | अर्चित्वा | समृच्य | अर्चितुम् |
| ओख | ओखित | ओखितवत् | ओखत् | | ओखित्वा | प्रोख्य | ओखितुम् |
| ओण् | ओणित | ओणितवत् | ओणत् | | ओणित्वा | समोण्य | ओणितुम् |
| कथ् | कथित | कथितवत् | कथयत् | कथयमान | कथयित्वा | संकथ्य | कथयितुम् |

| धातवः | क्त | क्तवतु | शतृ | शानच् | क्त्वा | ल्यप् | तुमुन् |
|---|---|---|---|---|---|---|---|
| डप् | डपित | डपितवत् | डपत् | | डपित्वा | प्रडप्य | डपितुम् |
| तड् | ताडित | ताडितवत् | ताडयत् | ताडयमान | ताडयित्वा | संताडय | ताडयितुम् |
| तन् | तत | ततवत् | तन्वत् | तन्वान | तनित्वा, तत्वा | वितत्य | तनितुम् |
| तप् | तप्त | तप्तवत् | तपत् | तपमान | तप्त्वा | संतप्य | तप्तुम् |
| तुल् | तोलित | तोलितवत् | तोलयत् | तोलयमान | तोलयित्वा | प्रतोल्य | तोलयितुम् |
| तुष् | तुष्ट | तुष्टवत् | तुष्यत् | | तुष्ट्वा | संतुष्य | तोष्टुम् |
| तॄ | तीर्ण | तीर्णवत् | तरत् | | तीर्त्वा | वितीर्य | तरितुम्<br>तरीतुम् |
| दण्ड | दण्डित | दण्डितवत् | दण्डयत् | दण्डयमान | दण्डयित्वा | सन्दण्डय | दण्डयितुम् |
| दल् | दलित | दलितवत् | दलत् | | दलित्वा | प्रदल्य | दलितुम् |
| दह् | दग्ध | दग्धवत् | दहत् | | दग्ध्वा | सन्दह्य | दग्धुम् |
| दा | दत्त | दत्तवत् | ददत् | ददान | दत्त्वा | व्यादाय | दातुम् |
| दिश् | दिष्ट | दिष्टवत् | दिशत् | | दिष्ट्वा | उपदिश्य | देष्टुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | यप् | तुम् |
|---|---|---|---|---|---|---|---|
| दिह् | दिग्ध | दिग्धवत् | दिहत् | दिहान | दिग्ध्वा | सन्दिह्य | देग्धुम् |
| दुह् | दुग्ध | दुग्धवत् | दुहत् | दुहान | दुग्ध्वा | प्रदुह्य | दोग्धुम् |
| दृश् | दृष्ट | दृष्टवत् | पश्यत् | | दृष्ट्वा | सन्दृश्य | द्रष्टुम् |
| दॄ | दीर्णदारित | दीर्णवत् दारितवत् | दृणत् दारयत् | दारयमाण | दीर्त्वा, दारयित्वा | विदीर्य विदार्य | दरितुम्, दरीतुम् दारयितुम् |
| दो | दित | दितवत् | द्यत् | | दीत्वा | प्रदाय | दातुम् |
| द्युत् | द्युतित | द्युतितवत् | | द्योतमान | द्युतित्वा द्योतित्वा | प्रद्युत्य | द्योतितुम् |
| घ्रा | घ्राणः | घ्राणवत् | घ्रात् | | घ्रात्वा | निघ्राय | घ्रातुम् |
| द्विष् | द्विष्ट | द्विष्टवत् | द्विषत् | द्विषाण | द्विष्ट्वा | विद्विष्य | द्वेष्टुम् |
| धा | हित | हितवत् | दधत् | दधान | हित्वा | निधाय | धातुम् |
| धाव् | धावित | धावितवत् | धावत् | धावमान | धावित्वा धौत्वा | प्रधाव्य | धावितुम् |
| धृ | धृत | धृतवत् | धरत् | धरमाण | धृत्वा | उद्धृत्य | धर्तुम् |
| ध्मा | ध्मात | ध्मातवत् | धमत् | | ध्मात्वा | आध्माय | ध्मातुम् |
| नद् | नदित | नदितवत् | नदत् | | नदित्वा | प्रणद्य | नदितुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | ल्यप् | तुम् |
|---|---|---|---|---|---|---|---|
| नम् | नत | नतवत् | नमत् | | नत्वा | प्रणम्य<br>प्रणत्य | नन्तुम् |
| नश् | नष्ट | नष्टवत् | नश्यत् | | नशित्वा<br>नंष्ट्वा | प्रणश्य | प्रणंष्टुम्<br>प्रणशितुम् |
| नह् | नद्ध | नद्धवत् | नह्यत् | नह्यमान | नद्ध्वा | अपिनह्य | नद्धुम् |
| निज् | निक्त | निक्तवत् | नेनिजित् | नेनिजान | निक्त्वा | अवनिज्य | नेक्तुम् |
| नी. | नीत | तव | नयत् | नयमान | नीत्वा | आनीय | नेतुम् |
| नु | नुत | नुतवत् | नुवत् | | नुत्वा | प्रणुत्य | नोतुम् |
| नृत् | नृत्त | नृत्तवत् | नृत्यत् | | नर्त्तित्वा | प्रनृत्य | नर्तितुम् |
| पच् | पक्व | पक्ववत् | पचत् | पचमान | पक्त्वा | सम्पच्य | पक्तुम् |
| पठ् | पठित | पठितवत् | पठत् | | पठित्वा | प्रपठ्य | पठितुम् |
| पत् | पतित | पतितवत् | पतत् | | पतित्वा | प्रपत्य | पतितुम् |
| पा | पीत | पीतवत् | पिबत् | | पीत्वा | प्रपाय | पातुम् |
| पां्क्ष | पात | पातवत् | पात् | | पात्वा | प्रपाय | पातुम् |
| पिष | पिष्ट | पिष्टवत् | पिंषत् | | पिष्ट्वा | सम्पिष्य | पेष्टुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | यप् | तुम् |
|---|---|---|---|---|---|---|---|
| पुष् | पुष्ट | पुष्टवत् | पुष्यत् | | पुष्ट्वा | सम्पुष्य | पोष्टुम् |
| पू | पूत | पूतवत् | पुनत् | पुनान | पूत्वा | उत्पूय | पवितुम् |
| पूज् | पूजित | पूजितवत् | पूजयत् | पूजयमान | पूजयित्वा | सम्पूज्य | पूजयितुम् |
| पृ | व्यापृत | व्यापृतवत् | | प्रियमाण | पृत्वा | व्यापृत्य | व्यापर्तुम् |
| प्रच्छ् | पृष्ट | पृष्टवत् | पृच्छत् | | पृष्ट्वा | परिपृच्छ्य | प्रष्टुम् |
| प्रथ् | प्रथित | प्रथितवत् | प्रथयत् | प्रथयमान | प्रथयित्वा | परिप्रथय्य | प्रथयितुम् |
| प्री | प्रीत | प्रीतवत् | प्रीणत् | प्रीणान | प्रीत्वा | सम्प्रीय | प्रेतुम् |
| फण् | फणित | फणितवत् | फणत् | | फणित्वा | सम्फण्य | फणितुम् |
| फल् | फलित | फलितवत् | फलत् | | फलित्वा | सम्फल्य | फलितुम् |
| बन्ध् | बद्ध | बद्धवत् | बध्नत् | | बद्ध्वा | आबध्य | बद्धुम् |
| भज | भक्त | भक्तवत् | भजत् | भजमान | भक्त्वा | विभज्य | भभक्तुम् |
| भञ्ज | भग्न | भग्नवत् | भञ्जत् | | भक्त्वा<br>भङ्क्त्वा | सम्भज्य | भङ्क्तुम् |
| भष् | भषित | भषितवत् | भषत् | | भषित्वा | सम्भष्य | भषितुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | ल्यप् | तुम् |
|---|---|---|---|---|---|---|---|
| भा | भात | भातवत् | भात | | भात्वा | विभाय | भातुम् |
| भिद् | भिन्न | भिन्नवत् | भिन्दत् | भिन्दान | भित्वा | विभिद्य | भेत्तुम् |
| भी | भीत | भीतवत् | बिभ्यत् | | भीत्वा | सम्भीय | भेतुम् |
| भुज् | भुक्त | भुक्तवत् | भुञ्जत् | भुञ्जान | भुक्त्वा | उपभुज्य | भोक्तुम् |
| भू | भूत | भूतवत् | भवत् | | भूत्वा | सम्भूय | भवितुम् |
| भूष् | भूषित | भूषितवत् | भूषयत् | भूषयमाण | भूषयित्वा | सम्भूष्य | भूषयितुम् |
| भृ | भृत | भृतवत् | बिभ्रत् | बिभ्राण | भृत्वा | सम्भृत्य | भर्तुम् |
| मथ् | मथित | मथितवत् | मथत् | | मथित्वा | प्रमथ्य | मथितुम् |
| मद् | मत्त | मत्तवत् | माद्यत् | | मदित्वा | सम्मद्य | मदितुम् |
| मन् | मत | मतवत् | | मन्यमान | मत्वा | सम्मत्य | मन्तुम् |
| मन् | मत | मतवत् | | मन्वान | मनित्वा, मत्वा | सम्मत्य | मनितुम् |
| मन्त्र | मन्त्रित | मन्त्रितवत् | | मन्त्रयमाण | मन्त्रयित्वा | सम्मन्त्र्य | मन्त्रयितुम् |
| मन्थ् | मथित | मथितवत् | मथ्नत् | | मथित्वा, मन्थित्वा | प्रमथ्य | मथितुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | यप् | तुम् |
|---|---|---|---|---|---|---|---|
| मा | मित | मितवत् | | निर्मिमाणः | मित्वा | प्रमाय | मातुम् |
| मुच् | मुक्त | मुक्तवत् | मुञ्चत् | मुञ्चमान | मुक्त्वा | विमुच्य | मोक्तुम् |
| मुष् | मुषित | मुषितवत् | मुष्णत् | | मुषित्वा | परिमुष्य | मोषितुम् |
| यज् | इष्ट | इष्टवत् | यजत् | यजमान | इष्ट्वा | प्रेज्य | यष्टुम् |
| यस् | यस्त | यस्तवत् | यस्यत्,यसत् | | यसित्वा | प्रयस्य | प्रयसितुम् |
| या | यात | यातवत् | यात् | | यात्वा | प्रयाय | यातुम् |
| युज् | युक्त | युक्तवत् | युञ्जत् | युञ्जान | युक्त्वा | प्रयुज्य | योक्तुम् |
| युध् | युद्ध | युद्धवत् | | युध्यमान | युद्ध्वा | संयुध्य | योद्धुम् |
| रक्ष् | रक्षित | रक्षितवत् | रक्षत् | | रक्षित्वा | संरक्ष्य | रक्षितुम् |
| रच | रचित | रचितवत् | रचयत् | रचयमान | रचयित्वा | विरचय्य | रचयितुम् |
| रट | रटित | रटितवत् | रटत् | | रटित्वा | संरट्य | रटितुम् |
| रम् | रत | रतवत् | विरमत् | रममाण | रत्वा | विरम्य, विरत्य | रन्तुम् |
| रुद् | रुदित | रुदितवत् | रुदत् | | रुदित्वा | विरुद्य | रोदितुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | ल्यप् | तुम् |
|---|---|---|---|---|---|---|---|
| रुध् | रुद्ध | रुद्धवत् | रुन्धत् | रुन्धान | रुद्ध्वा | संरुध्य | रोद्धुम् |
| लज्ज् | लज्जित | लज्जितवत् | | लज्जमान | लज्जित्वा | प्रलज्ज्य | लज्जितुम् |
| लप् | लपित | लपितवत् | लपत् | | लपित्वा | प्रलप्य | लपितुम् |
| लभ् | लब्ध | लब्धवत् | | लभमान | लब्ध्वा | उपलभ्य | लब्धुम् |
| लष् | लषित | लषितवत् | लष्यत्, लषत् | | लषित्वा | अभिलष्य | लषितुम् |
| लिख् | लिखित | लिखितवत् | लिखत् | | लिखित्वा, लेखित्वा | विलिख्य | लेखितुम् |
| लिप् | लिप्त | लिप्तवत् | लिम्पत् | लिम्पमान | लिप्त्वा | विलिप्य | लेप्तुम् |
| ली | लीन | लीनवत् | लिनत् | | लीत्वा | विलीय | लेतुम्, लातुम् |
| लू | लून | लूनवत् | लुनत् | लुनान | लूत्वा | प्रलूय | लवितुम् |
| वद् | उदित | उदितवत् | वदत् | | उदित्वा | प्रोद्य | वदितुम् |
| वाद् | वादित | वादितवत् | | वादयमान | वादयित्वा | अभिवाद्य | वादयितुम् |
| वन् | वत | वनवत् | | वन्वान | वनित्वा, वत्वा | संवन्य | वनितुम् |
| वप् | उप्त | उप्तवत् | वपत् | | उप्त्वा | निरुप्य | वप्तुम् |
| वस् | उषित | उषितवत् | वसत् | | उषित्वा | प्रोष्य | वस्तुम् |
| वश् | वशित | वशितवत् | | वशान | वशित्वा | संवश्य | वशितुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | यप् | तुम् |
|---|---|---|---|---|---|---|---|
| वर्ण् | वर्णित | वर्णितवत् | वर्णयत् | वर्णयमान | वर्णयित्वा | संवर्ण्य | वर्णयितुम् |
| वर्ष् | वर्षित | वर्षितवत् | वर्षत् | | वर्षित्वा | संवर्ष्य | वर्षितुम् |
| वह्<br>विद् | ऊढ<br>विन्न<br>निर्विण्ण | ऊढवत्<br>विन्नवत्<br>निर्विन्नवत् | वहत् | वहमान<br>विद्यमान | ऊढ्वा<br>वित्वा | उह्य<br>संविद्य | वोढुम्<br>वेत्तुम् |
| विद् | विदित | विदितवत् | विदत् विद्वान् | | विदित्वा | संविद्य | वेदितुम् |
| विश् | विष्ट | विष्टवत् | विशत् | | विष्ट्वा | निविश्य | वेष्टुम् |
| विष् | विष्ट | विष्टवत् | वेविषत् | वेविषाण | विष्ट्वा | परिविष्य | वेष्टुम् |
| वृ | वृत | वृतवत् | वृण्वत् | वृण्वान | वृत्वा | परिवृत्य | वरितुं, वरीतुम् |
| वृत् | वृत्त | वृत्तवत् | | वर्तमान | वर्तित्वा, वृत्वा | निवृत्य | वर्तितुम् |
| वृष् | वृष्ट | वृष्टवत् | वर्षत् | | वर्षित्वा, वृष्ट्वा | अभिवृष्य | वर्षितुम् |
| वॄ | वूर्ण | वूर्णवत् | वृणत् | | वूर्त्वा | परिवूर्य | वरितुं, वरीतुम्, |
| वे<br>शंस्<br>शक् | उत<br>शस्त<br>शक्त | उतवत्<br>शस्तवत्<br>शक्तवत् | वयत्<br>शंसत्<br>शक्नुवत् | वयमान | उत्वा<br>शंसित्वा, शस्त्वा<br>शक्त्वा | प्रवाय<br>प्रशस्य<br>प्रशक्य | वातुम्<br>शंसितुम्<br>शक्तुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | ल्यप् | तुम् |
|---|---|---|---|---|---|---|---|
| शप् | शप्त | शप्तवत् | शपत् | शपमान | शप्त्वा | संशप्य | शप्तुम् |
| शम् | शान्त | शान्तवत् | शाम्यत् | | शान्त्वा, शमित्वा | प्रशम्य | शमितुम् |
| शश् | शशित | शशितवत् | शशत् | | शशित्वा | प्रशश्य | शशितुम् |
| शिष् | शिष्ट | शिष्टवत् | शिषत् | | शिष्ट्वा | विशिष्य | शेष्टुम् |
| शी | शयित | शयितवत् | | शयान | शयित्वा | उपशय्य | शयितुम् |
| श्रु | श्रुत | श्रुतवत् | शृण्वत् | | श्रुत्वा | संश्रुत्य | श्रोतुम् |
| श्लिष् | श्लिष्ट | श्लिष्टवत् | श्लिष्यत् | | श्लिष्ट्वा | आश्लिष्य | श्लेष्टुम् |
| श्वस् | श्वसित | श्वसितवत् | श्वसत् | | श्वसित्वा | निश्वस्य | श्वसितुम् |
| सन् | सात | सातवत् | सन्वन् | सन्वान | सनित्वा, सात्वा | संसन्य | सनितुम् |
| साध् | साद्ध | साद्धवत् | साध्नुवत् | | साद्ध्वा | संसाध्य | साद्धुम् |
| सिच् | सिक्त | सिक्तवत् | सिञ्चत् | सिञ्चमान | सिक्त्वा | परिषिच्य | सेक्तुम् |
| सु | सुत | सुतवत् | सुन्वत् | सुन्वान | सुत्वा | प्रसुत्य | सोतुम् |
| सू | सूत | सूतवत् | | सूयमान | सूत्वा | प्रसूय | सोतुम्, सवितुम् |
| सृ | सृत | सृतवत् | सरत् | | सृत्वा | अनुसृत्य | सर्तुम् |
| सेव् | सेवित | सेवितवत् | | सेवमान | सेवित्वा | प्रसेव्य | सेवितुम् |
| स्तु | स्तुत | स्तुतवत् | स्तुवत् | स्तुवान | स्तुत्वा | संस्तुत्य | स्तोतुम् |

| धातवः | क्त | क्तवतु | शतृ | आनश् | क्त्वा | यप् | तुम् |
|---|---|---|---|---|---|---|---|
| स्तृ | स्तृत | स्तृतवत् | स्तृण्वत् | स्तृण्वान | स्तृत्वा | आस्तृत्य | स्तर्तुम् |
| स्तॄ | स्तीर्ण | स्तीर्णवत् | स्तृणत् | स्तृणान | स्तीर्त्वा | आस्तीर्य | स्तरीतुम्,तुम्, स्तरितुम् |
| स्था | स्थित | स्थितवत् | तिष्ठत् | प्रतिष्ठमान | स्थित्वा | प्रस्थाय | स्थातुम् |
| स्ना | स्नात | स्नातवत् | स्नात् | | स्नात्वा | प्रस्नाय | स्नातुम् |
| स्निह् | स्निग्ध स्नीढ | स्निग्धवत् स्नीढवत् | स्निह्यत् | | स्निहित्वा,स्निग्ध्वा.स्नीढ्वा स्नेहित्वा | संस्निह्य | स्नेहितुम् |
| स्पृश् | स्पृष्ट | स्पृष्टवत् | स्पृशत् | | | संस्पृश्य | स्प्रष्टुम् |
| स्पृह् | स्पृहित | स्पृहितवत् | स्पृहयत् | स्पृहयमाण | स्पृहयित्वा | संस्पृहय्य | स्पृहयितुम् |
| हन् | हत | हतवत् | घ्नत् | आघ्नान | हत्वा | आहत्य | हन्तुम् |
| हस् | हसित | हसितवत् | हसत् | | हसित्वा | विहस्य | हसितुम् |
| हा | हीन | हीनवत् | जहत् | | हित्वा | विहाय | हातुम् |
| हि | हित | हितवत् | हिन्वत् | | हित्वा | प्रहित्य | हेतुम् |
| हु | हुत | हुतवत् | जुह्वत् | | हुत्वा | संहुत्य | होतुम् |
| हृ | हृत | हृतवत् | हरत् | हरमाण | हृत्वा | संहृत्य | हर्तुम् |
| ह्री | ह्रीत, ह्रीण | ह्रीणवत्, ह्रीतवत् | जिह्रियत् | | ह्रीत्वा | प्रह्रीय | ह्रेतुम् |
| ह्वे | हूत | हूतवत् | ह्वयत् | ह्वयमान | हूत्वा | आहूय | ह्वातुम् |

इतिश्रीतपोगच्छाधिराजसकलस्वपरसमयपारावारपारीण—तीर्थसंरक्षणप्रवण-विद्यापीठादिप्रस्थानपञ्च-कसमाराधकसंविग्नशाखीयभट्टारकाचार्यवर्यश्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारान्तेवासिन्यायवाचस्पति-शास्त्रविशारदाचार्य श्रीविजयदर्शनसूरिशिष्य मुनिगुणविजयविरचितायां

॥ हैमधातुमालायां कृदन्तप्रकरणम् ॥

# ॥ सेडनिट्कारिकाः ॥

---- :o: ----

यद्यपि धातुपाठेष्वेव सेट्त्वानिट्त्वज्ञापकानि अनुबन्धविशेषरूपाणि चिह्नानि सङ्गतानि, तथापि सामान्यतया तत्स्वरूपावगतये शिष्यबुद्धिवैशद्यकारिकाः कारिकाः पूर्वाचार्यीयाः प्रतिपाद्यन्ते विव्रियन्ते च।

अथ सेट्त्वमनिट्त्वञ्च किं नामेति चेदुच्यते। इटा इकारस्यानुबन्धत्वाद् इकारेण सह वर्त्तते इति सेट् तस्य भावः सेट्त्वम्, न विद्यते इट् इकारो यस्य सोऽनिट् तस्य भावोऽनिट्त्वम्।

अत्रायं निष्कर्षः—येभ्यो धातुभ्यः परतो विधीयमानाः शित्संज्ञकभिन्नत्रोणादिभिन्नसकारादितकारादिप्रत्यया विशेषविधानं विहायादौ इकाररूपमिडागमं नित्यं गृह्णन्ति ते सेटः। ये न गृह्णन्ति तेऽनिटः। सेट्त्वानिट्त्वे च यद्यपि स्ताद्यशितोऽत्रोणादेरिति प्रत्ययस्यादौ विधानात्प्रत्ययस्यैव तथाप्युपचारेण धातोरपि। इह तावद्धातवो द्विधा, स्वरान्ता व्यञ्जनान्ताश्चेति। तत्र सूचिकटाहन्यायेनाल्पत्वादादौ स्वरान्तानां सेट्त्वानिट्त्वे विवेच्य तदनु व्यञ्जनान्तानां विवेचयति, तत्रापि ग्रन्थलाघवार्थं स्वरान्तेषु सेट्धातून् निर्दिश्य तद्व्यतिरेकेणानिटो व्यञ्जनान्तेषु अनिट्धातून् निर्दिश्य तद्व्यतिरेकेण सेटश्च दर्शयति।

> श्विश्रिडीशीयुरुक्ष्णुक्ष्णु–णुस्नुभ्यश्च वृगो वृङः।
> ऊदृदन्तयुजादिभ्यः स्वरान्ता धातवः परे ॥ १ ॥
> पाठ एकस्वराः स्युर्येऽनुस्वारेत इमे स्मृताः।

ये पाठे धातुपाठे धातुपाठोपदेशावस्थायामित्यर्थः। न तु द्विर्भावादौ। एकस्वरा एक एव स्वरो येषु ते एकस्वराः। तथा अनुस्वारेतः एति अपगच्छतीति।इत् प्रयोगकालेऽनवस्थायीत्यर्थः। अनुस्वार इत् येषु ते अनुस्वारेतः। तादृशा ये धातवः स्युस्ते इमे अभ्यस्ततमतया बुद्धिस्थत्वेन प्रत्यक्षा धातवः। अनिट इति पदमन्त्यकारिकान्तस्थमप्यत्र योज्यम्। स्मृताः। अर्थात्। धातुपाठोपदेशावस्थायां ये एकस्वरा अनुस्वारेतश्च भवेयुस्तेऽनिटो धातवो विज्ञेयाः। इदं च स्वरान्तव्यञ्जनान्तसाधारणं लक्षणं तेनोभयत्र योज्यम्। परे एतत्प्रथमकारिकोक्तेभ्योऽन्ये ये केचन स्वरान्ता एकस्वरा अनुस्वारेतश्च धातवस्ते सर्वेऽपि अनिटः। अस्यां कारिकायां चोक्ताः स्वरान्ताः धातवः सर्वेऽपि सेटः।

एवं निम्ननिर्दिशिता व्यञ्जनान्ता एकस्वरा अनुस्वारेतश्च धातवोऽनिटः।

तद्व्यतिरिक्ता व्यञ्जनान्ताः सेटश्च। इमे द्विविधा अपि धातवो ये औदितो न भवेयुस्ते ग्राह्याः औदितानामनुबन्धफलप्रतिपादकप्रकरणे वेट्त्वाभिधानात्। केभ्यः परे। श्विश्रिडीशीयुरुक्षुक्ष्णुस्नुभ्यः वृगः, वृङः उदृदन्तयुजादिभ्यः। अत्र वृद्ध्यर्थत्वेन माङ्गलिकत्वादादौ श्विधातोर्ग्रहणम्। ट्वोश्वि (श्वि) गतिवृद्ध्योः। श्रिग् (श्रि) सेवायाम्। डीङ् (डी) विहायसांगतौ। डीङ्च् (डी) गतौ। शीङ्क् (शी) स्वप्ने। यु-इति सामान्यनिर्देशेऽपि रुक्षुप्रभृतिसाहचर्यात्। युक् (यु) मिश्रणे इत्यस्यैव ग्रहणं। न तु युंग्श् (यु) बन्धने इत्यस्य। युणि (यु) जुगुप्सायामित्यस्य तु चौरादिकत्वादनेकस्वरत्वेन स्वत एव सेट्त्वम्। रु-इति सामान्यनिर्देशेऽपि क्षुप्रभृतिसाहचर्यात् रुक् (रु) शब्दे इत्यस्यैव ग्रहणं न तु रुङ् [रु] रेषणे च इत्यस्य। टुक्षुक् [क्षु] शब्दे। क्ष्णुक् (क्ष्णु) तेजने। णुक् (नु) स्तुतौ। स्नुक् (स्नु) प्रस्नवने वृग्ट् (वृ) वरणे। वृङ्श् (वृ) सम्भक्तौ। वृगण् (वृ) आवरणे इत्यस्य तु युजादिपाठे एव समावेशः। उकार एव ऊत ऋकार एव ऋत् ऊच्च ऋच्च ऊदृतौ तौ अन्ते एषामिति ऊदृदन्ताः ऊकारान्ता भूप्रभृतयः ऋकारान्ता तॄप्रभृतयः। युजादयो युजादिगणपठिता। इमे लीण् (ली) द्रवीकरणे। (प्रीण्) मतौ। प्रीगण् (प्री) तर्पणे धूगूण् (धू) कम्पने। अस्य ऊकारान्तत्वेनापि सेट्त्वम्। वृगूण् (वृ) आवरणे। जॄण् (जॄ) वयोहानौ अस्य ऋकारान्तत्वेनापि सेट्त्वम्। इमे सर्वेऽप्युक्ताः स्वरान्ताः सेटः। तद्व्यतिरिक्ताः स्वरान्ता अनिटः। अथ व्यञ्जनान्ताननिटो नामग्राहं दर्शयति—

द्विविधोऽपि शकिश्चैवं वचिर्विचिरिची पचिः ॥ २ ॥
सिञ्चतिर्मुचिरत्तोऽपि पृच्छतिर्भ्रस्जिमस्जिभुजयो युजिर्यजिः।
ष्वञ्जिरञ्जिरुजयो णिजिविजृषञ्जिभञ्जिभजयः सृजित्यजी ॥ ३ ॥
स्कन्दिर्विद्यविद्लविन्तयो नुदिः स्विद्यतिः शदीसदी भिदीच्छिदी
तुद्यदी पदिहृदी स्विदीक्षुदी राधिसाधिशुधयो युधिव्यधी ॥ ४ ॥
बन्धबुध्यरुधयः क्रुधिक्षुधी सिध्यतिस्तदनुहन्तिमन्यती।
आपिना तपिशापिक्षिपिच्छुपो लुम्पतिः सृपिलिपी वपिस्वपोः॥५॥
यभिरभिलभियम्भिरम्निमिगमयः क्रुशिलिशिरुशिदिशदिशितिदशयः
स्पृशिमृशतिविशलिहशिशिश्लिषशुपयस्त्विषिपिषिविष्लकृषितुषिदुषिपुषयः ॥ ६ ॥

श्लिण्यतिर्द्विषिरतो घसिवसति रोहतिर्लुहिरिही अनिड्गदितौ।
देग्धिदोग्धिलिह्यो मिहिवहती नह्यतिर्दहिरितिस्फुटमनिटः॥७॥

शकींच् ( शक् ) मर्षणे। शक्लृंट् ( शक् ) शक्तौ। अत्र शक्धातुरेव शकिः इकिश्तिव्र स्वरूपार्थे॥ इति स्वरूपे इप्रत्यये किप्रत्यये वा रूपम्, एवमग्रेतनधातुषु यथायोगं स्वरूपार्थे इप्रत्ययः किप्रत्ययः श्तिव्प्रत्यय इति ज्ञेयम्। वचंक् ( वच् ) भाषणे। ब्रूग्क् ( ब्रू ) व्यक्तायां वाचि इत्यस्य यो वच्-आदेशस्तस्य लाक्षणिकत्वेऽपि अत्र ग्रहणम्। अत एवास्य ब्रूधातोरूकारान्तत्वेन सेट्त्वप्राप्तावपि धातुपाठे सानुस्वारनिर्देशेनानिट्त्वं प्रतिपादितम्। वचण् ( वच् ) भाषणे इत्यस्य तु युजादिपाठात्सेट्त्वमेव। विचृंपी ( विच् ) पृथग्भावे। रिचृंपी [ रिच् ] विरेचने। रिचण ( रिच् ) वियोजने च इत्यस्य तु युजादिपाठात्सेट्त्वमेव। डुपचींष् ( पच् ) पाके। षिचींत् ( सिच् ) क्षरणे। अस्य स्वरूपे श्तिव् प्रत्यये सिञ्चतिरिति रूपम्। मुच्लृंती ( मुच् ) मोक्षणे। मुचण् ( मुच् ) प्रमोचने इत्यस्य चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव। प्रछंत् ( प्रच्छ ) ज्ञीप्सायाम्। भ्रस्जींत् ( भ्रस्ज् ) पाके। टुमस्जींत् ( मस्ज्-मज्ज् ) शुद्धौ। भुजींत् ( भुज् ) कौटिल्ये। भुजंप् ( भुज् ) पालनाभ्यवहारयोः। युजिंच् ( युज् ) समाधौ। युॕंपी ( युज् ) योगे। युजण् ( युज् ) संपर्चने इत्यस्य तु युजादिपाठात्सेट्त्वमेव। यजीं ( यज् ) देवपूजासंगतिकरणदानेषु। ष्वञ्जिंत ( स्वञ्ज् ) सङ्गे। रञ्जीं ( रञ्ज् ) रागे। रञ्जींच् (रञ्ज्) रागे। रुजोंत् ( रुज् ) भङ्गे॥ रुजण् ( रुज् ) हिंसायाम् अस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव। णिजूंकी निज् शौचे च। विॕकी ( विज् ) पृथग्भावे विज्ॄ इति ऋकारसहितग्रहणादस्यैव विज् धातोर्ग्रहणम्। न तु ओविजैति [विज्] भयचलनयोरित्यस्य ओविजैप् ( विज् ) भयचलनयोरित्यस्य च। ननु अत्यन्तान्तिकस्थनिज्-साहचर्यादभिमतस्यैव ग्रहणे किं पुनः ऋकारसहितनिर्देश इति चेत्साहचर्यपरिभाषाया अनित्यत्वसूचनार्थमेतत्तेन शब्दसहचरितासहचरितयोः सदोरत्र प्रकरणे ग्रहणम्। षञ्जं ( सञ्ज् ) सङ्गे। भञ्जींप् ( भञ्ज् ) आमर्दने। भजीं ( भज् ) सेवायाम्। भजण् ( भज् ) विश्राणने। इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव। सृजिंच् [सृज् ] विसर्गे। सृजंत् ( सृज् ) विसर्गे। त्यजं [त्यज्] हानौ। स्कन्दृं [ स्कन्द् ] गतिशोषणयोः। विद्य-इति श्यविकरणसहितग्रहणादनेन। विदिंच् [ विद् ] सत्तायामित्यस्य ग्रहणम्। विद्लृ-इति लृकारानुबन्धसहितग्रहणादनेन। विद्लृंती ( विद् ) लाभे इत्यस्य ग्रहणम्। विन्ति-इति श्नविकरणस-

हितग्रहणादनेन । विदिंपू ( विद् ) विचारणे इत्यस्य ग्रहणम् । एषां विशेषेणोपादानात् । विदक् ( विद् ) ज्ञाने इत्यस्य न ग्रहणम् । विदिण् ( विद् ) चेतनाख्याननिवासेषु इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वं सिद्धमेव ॥

वेत्तेर्विदितं वित्तेर्विन्नं वित्तश्च विद्यतेर्विन्नम् ॥
वित्तं धने प्रतीते च विन्दतेर्विन्नमन्यत्र ॥ १ ॥

णुदंत् ( नुद् ) प्रेरणे । स्विद्यतीति श्यविकरणसहितग्रहणादनेन ञिष्विदांच् ( स्विद् ) गात्रप्रक्षरणे इत्यस्यैव ग्रहणं नतु ञिष्विदाङ् ( स्विद् ) मोचने च इत्यस्य । शद्लृं ( शद् ) शातने षद्लृं ( सद् ) विशरणगत्यवसादनेषु । षद्लृंत् ( सद् ) अवसादने । भिदूंपी ( भिद् ) विदारणे । छिदूंपी ( छिद् ) द्वैधीकरणे । तुदींत् [ तुद् ] व्यथने । अदंक् ( अद् ) भक्षणे । पदिंच् [ पद् ] गतौ पदिण् ( पद् ) गतौ । इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । हदिं [ हद् ] पुरीषोत्सर्गे । खिदिंच् [ खिद् ] दैन्ये । खिदंत् [ खिद् ] परिघाते । खिदिंप् ( खिद् ) दैन्ये । क्षुदूंपी ( क्षुद् ) संपेषे । राधंच् ( राध् ) वृद्धौ । राधंट् (राध्) संसिद्धौ । साधंट् ( साध् ) संसिद्धौ । शुधंच् ( शुध् ) शौचे । युधिंच् ( युध् ) सम्प्रहारे । व्यधंच् ( व्यध् ) ताडने । बन्धश् [ बन्ध् ] बन्धने । बन्धण् ( बन्ध् ) संयमने इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । बुध्य-इति श्यविकरणसहितनिर्देशात् । बुधिंच् ( बुध् ) ज्ञाने इत्यस्यैव ग्रहणं नतु बुधूंग् ( बुध् ) बोधने बुध ( बुध् ) अवगमने इत्यस्य च। रुधूंपी ( रुध् ) आवरणे अनोरुधिंच (अनु-रुध्) कामे । क्रुधंच् [ क्रुध् । कोपे। क्षुधंच् [ क्षुध् ] बुभुक्षायाम् । सिध्यति-इति श्यविकरणसहितनिर्देशात् षिधूच् ( सिध् ) संराद्धौ इत्यस्यैव ग्रहणं न तु षिध् ( सिध् ) गत्यामित्यस्य षिधौ [ सिध् ] शास्त्रमाङ्गल्ययोरित्यस्य च।

हनंक् ( हन् ) हिंसागत्योः । मन्यति-इति श्यविकरणसहितनिर्देशात् । मनिंच् ( मन् ) ज्ञाने इत्यस्यैव ग्रहणं नतु । मनूयि ( मन् ) बोधने इत्यस्य ॥ मनिण् ( मन् ) स्तम्भे इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । आप्लृंट् ( आप् ) व्याप्तौ । आप्लृण् ( आप् ) लम्भने इत्यस्य तु युजादिपाठात्सेट्त्वमेव । तपं [ तप् ] संतापे । तपिंच् ( तप् ) ऐश्वर्ये वा । तपिण् ( तप् ) दाहे इत्यस्य तु युजादिपाठात्सेट्त्वमेव । शपीं ( शप् ) आक्रोशे । शपींच् [ शप् ] आक्रोशे ॥ क्षिपंच् ( क्षिप् ) प्रेरणे । क्षिपिंत् ( क्षिप् ) प्रेरणे ।

छुपंत् (छुप् ) स्पर्शे लुम्पति इति मागमसहितनिर्देशात् लुप्लृंती [ लुप् ]

छेदने इत्यस्यैव मागमार्हस्य ग्रहणं नतु लुपच्व [ लुप् ] विमोहने इत्यस्य । सृप्लृं ( सृप् ) गतौ । लिँपत् [ लिप् ] उपदेहे डुवपीं ( वप् ) बीजसंताने । ञिष्वपंक् ( स्वप् ) शये । यभं [ यभ् ] मैथुने । रभिं [ रभ् ] राभस्ये । डुलभिंष् ( लभ् ) प्राप्तौ । यमूं [ यम् ] उपरमे । रमिं ( रम् ) क्रीडायाम् । णमं [ नम् ] प्रह्वत्वे गम्लृं [ गम् ] गतौ । क्रुशं [ क्रुश ] आह्वानरोदनयोः । लिशिंच्व ( लिश् ) अल्पत्वे लिशंत् ( लिश् ) गतौ । रुशंत् ( रुश् ) हिंसायाम् । रिशंत् ( रिश् ) हिंसायाम् ।दिशित् ( दिश् ) अतिसर्जने दंशं ( दंश् ) दशने । स्पृशंत् ( स्पृश् ) स्पर्शे । मृशंत् ( मृश् ) आमर्शने । विशंत् ( विश् ) प्रवेशने दृशृं ( दृश् ) प्रेक्षणे लृकारसहितग्रहणात् । शिष्लृंप् ( शिष् ) विशेषणे इत्यस्यैव ग्रहणं नतु शिष (शिष्) हिंसायामित्यस्य । शिषण ( शिष् ) असर्वोपयोगे इत्यस्य तु युजादिपाठात्सेट्त्वमेव शुषंच्व ( शुष् ) शोषणे त्विषीं ( त्विष् ) दीप्तौ । पिष्लंप् ( पिष् ) संचूर्णने । विष्लृ–इति लृकारसहितनिर्देशात् विष्लृंक्की ( विष् ) व्याप्तौ इत्यस्यैव ग्रहणं न तु विष् ( विष् ) सेचने इत्यस्य विषश् विष् ) विप्रयोगे इत्यस्य च । कृषं ( कृष् ) विलेखने । कृषींत् [ कृष् ] विलेखने । तुषंच्व [ तुष् ] तुष्टौ ।दुषंच्व ( दुष् ) वैकृत्ये दुष्–सहचर्यात् पुषंच्व ( पुष ) पुष्टौ इत्यस्यैव ग्रहणं न तु पुष ( पुष् ) पुष्टौ इत्यस्य पुषश् ( पुष् ) पुष्टौ इत्यस्य च पुषण् ( पुष् ) धारणे इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । श्लिष्यति–इति श्यविकरणसहितनिर्देशात् । श्लिषंच्व ( श्लिष् ) आलिङ्गने इत्यस्यैव ग्रहणं न तु । श्लिषू ( श्लिष् ) दाहे इत्यस्य । श्लिषण् ( श्लिष् ) श्लेषले इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । द्विषींक् ( द्विष् ) अप्रीतौ । घस्लृं ( घस् ) अदने । वसति–इति शव्विकरणसहितनिर्देशात् । वसं ( वस् ) निवासे इत्यस्यैव ग्रहणं न तु वसिक् ( वस् ) आच्छादने इत्यस्य । वसूच्व ( वस् ) स्तम्भे इत्यस्य च । वसण् ( वस् ) स्नेहच्छेदावहरणेषु इत्यस्य तु चौरादिकत्वेनानेकस्वरत्वात्सेट्त्वमेव । ( रुहं ) रुह् ) जन्मनि । अत्र रोहति–इति शव्विकरणसहितनिर्देशः श्लोकरचनार्थः । .लुहि रुहि ( लुह्–रुह् इमौ धातुपाठेषु न दृश्येते छान्दसौ मन्तान्तरीयौ वा संभाव्येते । देग्धीति । दिहींक् ( दिह् ) लेपे । दोग्धीति । दुहींक् ( दुह् ) क्षरणे । लिहींक् ( लिह् ) आस्वादने । मिहं मिह् ) सेचने वहीं ( वह् ) प्रापणे । णहींच्व ( नह् ) बन्धने । दहं दह् भस्मीकरणे । इति स्फुटं यथा स्यात्तथा इमे व्यञ्जनान्ता धातवोऽनिटः, तद्व्यतिरिक्ता व्यञ्जनान्ताः-सेटः । इति स्वरान्तव्यञ्जनान्तधातूनां सेट्त्वानिट्त्वे प्रपञ्चिते ॥

॥ समाप्ता अनिट्कारिकाः ॥

## ॥ अथ धातुप्रत्ययानुबन्धफलप्रतिपादकाः श्लोकाः ॥



उच्चारणेऽस्त्यवर्णाद्य आः क्तयोरिण् निषेधने ।
इकारादात्मनेपद-मीकाराच्चोभयं भवेत् ॥ १ ॥
उदितः स्वरान्नोन्तश्चो-क्त्वादाविटो विकल्पनम् ।
रूपान्त्ये ङेपरेऽह्रस्व ऋकारादङ् विकल्पकः ॥ २ ॥
लृकारादङ् समायात्येः सिचि वृद्धिनिषेधकः ।
एेः क्तयोरिण्निषेधः स्या-दोः क्तयोस्तस्य नो भवेत् ॥ ३ ॥
औकार इड्विकल्पार्थेऽनुस्वारोऽनिड्विशेषणे ।
लृकारश्च विसर्गश्चा-नुबन्धो भवतो नहि ॥ ४ ॥
कोऽदादिर्न गुणी प्रोक्तः खे पूर्वस्य मुमागमः ।
गे नोभयपदी प्रोक्तो घश्च चजोः कगौ कृतौ ॥ ५ ॥
आत्मने गुणरोधे ङ-श्चो दिवादिगणो भवेत् ।
ञो वृद्धौ वर्तमाने क्तः टः स्वादिष्ठवुंकारकः ॥ ६ ॥
त्रिमगर्थो डकारः स्याण् णश्चुरादिश्च वृद्धिकृत् ।
तस्तुदादौ नकारश्चेच्चापुंसीति विशेषणे ॥ ७ ॥
रुधादौ नागमे पोहि मो दामः सम्प्रदानके ।
यस्तनादौ रकारः स्यात् पुंवद्भावार्थसूचकः ॥ ८ ॥
स्त्रीलिङ्गार्थे लकारो हि उत ओर्विति वो भवेत् ।
शः क्र्यादिः क्यः शिति प्रोक्तः षः षितोङ् विशेषणे ॥ ९ ॥
पदत्वार्थे सकारो हि नोक्ता अत्र न सन्ति च ।
धातूनां प्रत्ययानाञ्चा-नुबन्धः कथितो मया ॥ १० ॥

उच्चारणम् उच्चारणार्थं श्रुतिसुखदोच्चारणार्थमिति यावत् । अवर्णाद्यः अवर्णस्तु अकार आकारश्च वर्णग्रहणे स्वसंज्ञकस्यापि ग्रहणमिति न्यायात् । तत्राकारव्यवच्छेदार्थमाह–अवर्णस्य अकाराकाररूपस्याद्यः प्रथम अकार इत्यर्थः । अस्ति । अकारः श्रुतिसुखदोच्चारणार्थं धात्वादौ अनुबन्धतया योज्यत इत्यर्थः । यथा तक ( तक् ) हसने । एवम् आ आकारः क्तयोः क्तक्तवतु प्रत्यययोरादौ इण्निषेधने इकारनिषेधार्थः । यथा हुर्छा ( हूर्छ् ) कौटिल्ये । अत्रादित्त्वात् आदित इति क्तयोरिडभावे

हूर्णः हूर्णवान्। इकाराद् आत्मनेपदं भवति। यथा ककि (कक) लौल्ये। अत्र इङ्गित इत्यात्मनेपदे ककते। चः समुच्चये। ईकाराद् उभयमुभयपदं भवति। भजीं [भज्] सेवायाम्। अत्र ईदित्वात्फलवत्कर्तरि ईगित इत्यात्मनेपदम्। अफलवति तु शेषात्परस्मै इति परस्मैपदमेवोभयपदं भवति। चो–उश्च ऊश्चानयोः समाहार इति ऊ ततः क्लीबे इति ह्रस्वत्वे उ इति ततः च–उ–इति अकारस्य उकारस्य च सन्धौ चो इति जातम्। तथा च चोशब्देन च, उः, ऊः, इति ज्ञेयम्। तत्र चकारः समुच्चये। उः उकार उदितः स्वरान्नोऽन्त इत्यत्र विशेषणार्थः। ऊः ऊकारः क्त्वादौ क्त्वाप्रत्ययस्य आदौ इड इकारस्य विकल्पनं करोतीतिशेषः। अथवा–उ–उदितः स्वरान्नोऽन्तः च–ऊः इति ऊदितस्वरान्नोऽन्तः, च–ऊः, इति ऊदितस्वरान्नोऽन्तश्चोः इति पाठो ज्ञेयः। तत्र प्रथमो य उशब्दस्तेन उरूपमक्षरमिति नपुंसकलिङ्गार्थं व्याख्येयम्। यथा तकु (तकु–तन्कु–तङ्क) कृच्छ्रजीवने। अत्र उदित्वाद् उदितः स्वरान्नोऽन्त इति नागमः। वञ्चू (वञ्चू) गतौ। ऊदितो वा इति वेट्। वक्त्वा। इटि तु ऋत्तृषेति क्त्वो वा कित्वे वचित्वा वञ्चित्वा ऋ उपान्त्ये इत्यवस्थायां सन्धौ रुपान्त्ये। ङे परे ङपरकणौ प्रत्यये इति यावत् अह्रस्वो ह्रस्वाभावः। ङपरकणिप्रत्यये परे सति ऋदितां धातूनामुपान्त्यस्य ह्रस्वो न भवति। यथा ओखृ (ओख्) शोषणालमर्थयोः। अत्र ऋदित्वाद् ङपरे णौ उपान्त्यस्येति न ह्रस्वः। मा भवानोचिखत्। ऋदित्वादेव चौतो नेत्संज्ञा प्रयोगित्वाच्च। एवं राखृ (राख्) शोषणालमर्थयोः। अरराखत्। ऋकाराद् अङः विकल्प एव विकल्पकः। च्युतृ (च्युत्) आसेचने। ऋदित्वाद् ऋदिच्छ्र्वीति वाङि अच्युतत् अच्योतीत्। लृकाराद् अङ् समायाति गम्लृं (गम्) गतौ। लृदित्वाद् लृदिद्द्युतादित्यङि अगमत्। एः एकारः सिचि वृद्धिनिषेधकः। कटे (कट्) वर्षावरणयोः। अत्र व्यञ्जनादेर्वोपान्त्यस्येति वा प्राप्ताया वृद्धेरेदित्वान्न श्विजाग्रिति प्रतिषेधे अकटीत्। ऐः ऐकारो यदि भवेत्तर्हि क्तयोःक्तक्तवतुप्रत्यययोरादौ इण्निषेधो भवति। कटै (कट्) गतौ। अत्रैदित्वात् डीयश्वैदितःक्तयोरिति क्तयोर्नेट् कट्टःकट्टवान्। ओः ओकारो यदि स्यात्तर्हि क्तयोः क्तक्तवतुप्रत्यययोस्तकारस्य नो नकारो भवेत् ओवैं (वै) शोषणे। अत्र ओदित्वात् सूयत्यादीति क्तयोस्तस्य नत्वे वानः वानवान्। ओस्टृ (स्टृ) शब्दोपतापयोः। अत्रौदित्वाद् धूगौदित इति वेट्। स्वर्ता स्वरिता सुस्वूर्षति सिस्वरिषति। अनुस्वारः विन्दुरूपोऽनिड्विशेषणे अनिट्त्वार्थं इत्यर्थः।

२. प्रां (पा) पाने। अत्रानुस्वारेत्त्वात् स्ताद्यशित इति प्राप्तस्येटः एकस्व-

रादनुस्वारेत इति निषेधः। पाता पास्यति । ॡकारो विसर्गश्चानुबन्धो न भवतः। ककारो यदि धातौ स्यात्तदा धातुः अदादिर्भवति। एवं ककारो यदि प्रत्यये स्यात्तदा तस्मिन् प्रत्यये परे धातुर्गुणी गुणवान् न भवति। हनंक् (हन्) हिंसागत्योः। कित्करणाददादित्वं तेन कर्तर्यनद्भ्यः शव् इत्यत्र अदादिवर्जनाच्छवभावे हन्ति। भूसत्तायाम्। भू-क्यात्-भूयात् अत्र कित्त्वेन नामिनो गुणोऽक्ङितीत्यत्र क्ङिद्वर्जनान्न गुणः खे पूर्वस्य—मुमागम इति मुम्-इति (म्)इत्यस्य प्राचां संज्ञा तया—इङ्व्यवहारः प्राचां—संज्ञाया व्यवहार इत्यत्र प्रमाणम्—यजादेः संप्रसारणमिति एवञ्च मुमागम इत्यस्य मागम इत्यर्थः। खे खिति पूर्वस्य म् आगमो भवति मनिच् (मन्) ज्ञाने कर्तुः खश् इति खशि खित्यनव्ययेति मागमे च पटुमात्मानं मन्यत इति पटुंमन्यः॥ श्रिग् (श्रि) सेवायाम्। गित्त्वात्फलवति कर्तरि ईगित इत्यात्मनेपदेऽन्यत्र शेषात्परस्मायिति परस्मैपदे चोभयपदं ज्ञेयम्। श्रयते श्रयति। घो घकारो यदि स्यात्तदा चजोः चकारजकारयोः कगौ क्रमेण ककारगकारौ कृतौ विहितौ ज्ञातव्यौ। भाविनि भूतोपचाराद्। घकारे इति चकारस्य चकारो जकारस्य गकारो भवतीत्यर्थः। डुपचींष् (पच्) पाके पचनं (पच्—घञ्) पाकः। यजीं (यज्) देवपूजासंगतिकरणदानेषु यजनं (यज्—घञ्) यागः। अत्र चजः कगमिति चकारस्य कत्वं जकारस्य गत्वञ्च। आत्मने इति पदैकदेशे पदसमुदायोपचाराद् आत्मनेपदे आत्मनेपदार्थं गुणरोधे गुणनिषेधार्थश्च ङो ङकारो भवति। गांङ् (गा) गतौ ङित्त्वाद् इङित इत्यात्मनेपदे गाते। द्युति (द्युत्) दीप्तौ। द्युत्–अङ् अद्युतत् अत्र ङित्त्वेन—नामिन इत्यत्र ङिद्वर्जनान्न गुणः। चः चकारो यदि स्यात्तदा दिवागणो भवेत् दिवादिगणीयो धातुर्भवेदित्यर्थः। कुथच् (कुथ्)पूतिभावे। अत्र चित्त्वाद्दिवादित्वेन दिवादेरिति श्ये कुथ्यति। ञो ञकारो वृद्धौ वृद्ध्यर्थः॥

एवं ञो नाम ञकारोपलक्षितो ञिर्यदि भवेत्तदा धातोर्वर्तमाने क्तप्रत्ययो भवति। भू सत्तायाम्। अनु–अ–भू–ञिच् अन्वभावि–अत्र ञित्त्वाद् ञ्णितीति वृद्धिः। ञिक्ष्विदा (क्ष्विद्) अव्यक्ते शब्दे। ञित्त्वाज्ज्ञानेच्छार्चेति सत्यर्थे क्तः। क्ष्विद्यते क्ष्विण्णः। टकारो यदि स्यात्तदा स्वादिः स्यात्। षिगट् (सि) अभिबवे। अत्र टित्त्वेन स्वादित्वात् स्वादेः श्नुरिति श्नौ सिनुते (टः स्वादिष्ठ्युकारकः) अत्र ठ्युकारकः, इति पाठो न समीचीनः ठानुबन्धानुपलम्भात् ठ-इत्यस्य निर्विभक्तिकत्वात् अयोग्यतया समासाभावात घुकारक इत्यत्र घुरूपकार्यानुपलम्भाच्च अतः टःस्वादिरशुकारकः, इति पाठः सम्यक् टकारः स्वादिः (षिं-

गट्–सिनुते इति उकारविशिष्टः–टकारः अथुकारकः यथा टुवपीं बीजसन्ताने, इति ' द्वितोऽथुः '.इति अथौ वपथुरिति । त्रिमगर्थो डकार इत्यग्रिमग्रन्थानुरोधेन–उकारविशिष्ट इति अवश्याध्याहार्यम्–इति तस्मिन् पाठे न कोऽपि दोष इति–त्रिमग् अर्थः प्रयोजनं यस्य तादृशो डकारः स्यात् अत्र डकारेण डकारोपलक्षितो डुकारो ज्ञेयः । डुपचींष् ( पच् ) पाके । ड्विक्त्वात्त्रिमकि पाकेन निर्वृत्तं पक्त्रिमम् । णो णकारो यदि स्यात्तदा चुरादिः धातुश्चुरादिगणीयो भवति, एवं णकारो वृद्धिकृदूअस्ति वल्कण् ( वल्क् ) भाषणे । णित्वाच्चुरादित्वेन चुरादिभ्य इति णिचि वल्कयति । दु (दु, गतौ णवि वृद्धौ दुदाव । क्षिपींत् ( क्षिप्) प्रेरणे । तित्वात् तुदादेः श इति क्षिपति । नकारश्च इच्चापुंसोऽनित्क्याप्परे इत्यत्र विशेषणार्थः । खट्वाकिका खट्वाका । अनिदिति किम् । दुर्गका पकारो रुधादौ नागमार्थः अर्थात् पकारेण रुधादित्वं भवति रुधादित्वाच्च नागमो भवति । रिचूंपी ( रिच् ) विरेचने रुधां स्वरादिति श्ने रिणक्ति किन्तु रुधादौ तागमे पोहि–इति पाठः सम्यक्–तस्येयं व्याख्या पकारो रुधादिघटकः पकारानुबन्धेन धातूनां रुधादित्वं भवतीति भावः, प्रत्ययस्थपकारानुबन्धः तागमप्रयोजकः–हृग्–इत्यादिना क्यपि ' ह्रस्वस्य तः पित्कृति ' तागमे आदृत्य प्राहृत्य इति, मो मकारः, दामः सम्प्रदाने ऽधर्म्ये आत्मने च इत्यत्र विशेषणार्थः । दास्या सम्प्रयच्छते कामुकः । यो यकारः तनादेः सूचकः । क्षणूयी ( क्षण् ) हिंसायाम् । हिंसायाम् । यित्त्वात् कृगृतनादेरित्यौ च तनुते । रकारः पुंवद्भावरूपो योऽर्थस्तत्सूचकः । पट्वी प्रकारोऽस्याः पटुजातीया । प्रकारे जातीयरिति जातीयरि प्रत्यये रितीति पुंवद्भावः । लकारो स्त्रीलिङ्गार्थः । जनानां समूहो जनता अत्र तल्प्रत्ययस्य लित्वात्स्त्रीत्वम् । वकार उत और्विंतिव्यञ्जनेऽद्वेरित्यत्र विशेषणार्थः द्युंकू (द्यु) अभिगमने । द्यौति । शकारो यदि स्यात्तदा क्र्यादिः स्यात् । षिंगूश् ( सि ) बन्धने । शित्त्वात्क्र्यादित्वेन क्र्यादेरिति श्नाप्रत्यये सिनाति । क्यःशितीत्यत्र विशेषणार्थः । भूयते अत्र भावकर्मविहिते शिति क्यः । षकारःषितोऽङ् इत्यत्र विशेषणार्थः । डुपचींष् (पच्) पाके । पच्यतेऽसाविति पचा । सकारः पदत्वार्थे पदत्वप्रयोजकः । भवतोरिकणीयसौ, इतीयसि नामसिदय्व्यञ्जने–इति पदत्वे धुटस्तृतीय इति दत्वे भवदीय इति येऽनुबन्धतया नोक्तास्तेऽनुबन्धा न सन्ति । अनुबन्धास्तु इयन्त एव । अपि तु अत्रानुबन्धानां यद्यत्फलमुक्तं तेन प्रयोजनान्तराण्यप्युपलक्ष्यन्ते । यथा टकारस्य प्रयोजनं स्त्रादित्वमेवोक्तं तथापि ट्धें ( धे ) पाने । अत्र टकारःशुनिंधयीत्यादौ

ङ्यर्थः । एवं ङकारस्यान्त्यस्वरलोपप्रभृतिप्रयोजनं स्वयमूह्यम् ।

अत्रार्थेऽन्येऽपि कतिचित्श्लोकाः

अदादयः कानुबन्धाश्चानुबन्धा दिवादयः
स्वादयष्टानुबन्धा–स्तानुबन्धास्तुदादयः ॥ १ ॥
रुधादयः पानुबन्धा यानुबन्धास्तनादयः ॥
क्र्यादयः शानुबन्धा णानुबन्धाश्चुरादयः ॥ २ ॥

॥ इत्यनुबन्धफलप्रतिपादकप्रकरणम् ॥

## ॥ वृत्गणफलनिरूपणम् ॥

द्युतादेरद्यतन्यां चाङात्मनेपदमिष्यते
वृदादिपञ्चकेभ्यो वा स्यसनोरात्मनेपदम् ॥ १ ॥
ज्वलादेर्णौ विकल्पेन यजादेः संप्रसारणम् ।
घटादीनां भवेद्ह्रस्वो णौ परेऽजीघटत् सदा ॥ २ ॥
अद्यतन्यां पुषादित्वादङ् परस्मैपदे भवेत् ।
स्वादित्वाच्च क्तयोस्तस्य नकारः प्रकटो भवेत् ॥ ३ ॥
प्वादीनां भवेद्ह्रस्वो ल्वादेस्क्तयोश्च नो भवेत् ।
युजादयो विकल्पेन ज्ञेयाश्चुरादिके गणे ॥ ४ ॥
मुचादेर्नागमः शे च कु टादित्वात्सिचि परे ।
गुणवृद्धेरभावश्च कथितो हेमसूरिणा ॥ ५ ॥
अदन्तानां गुणो वृद्धिर्यङ् चुरादेश्च नो भवेत् ।
संक्षेपेण फलश्चैतज्ज्ञेयं सूत्रानुसारतः ॥ ६ ॥

वृत् गणानामन्तर्गणास्तेषामान्तर्गणकरणे यत्फल तदुच्यते । द्युतादेर्द्युतादिगणपठितधातोरद्यतन्यामङ्आत्मनेपदश्च वा भवति । अर्थात्–द्युतादिगणस्य फलमद्यतन्यां विकल्पेनाङात्मनेपदभवनम् । द्यति ( द्युत् ) दीप्तौ । द्युद्भ्यो ऽद्यतन्यामित्यात्मनेपदिनोऽपि विकल्पनात्पक्षे शेषात्परस्मायिति परस्मैपदे लदिद्युतादीत्यङि अद्युतत् । पक्षे अद्योतिष्ट । वृदादिपञ्चकेभ्यो वृदादेः पञ्चनः स्यसनोः स्यादौ प्रत्यये सनि च विषये आत्मनेपदं वा भवति अयं वृदादिर्द्युताद्यन्तर्गणस्तेन द्युतादिफलन्तु अत्रैव तदतिरिक्तमिदं ज्ञेयम् । वृतूङ् ( वृत् ) वर्तने । अवृतत् अवर्तिष्ट । वृद्भ्य इति स्यसनोर्विषये वात्मनेपदमात्मनेपदाभावे च न वृद्द्भ्य इति नेट् । वर्तिष्यते, व-

त्स्यंति, अवर्तिष्यत, अवर्त्स्यत् । सनि विवृत्सति विवर्तिषते । ज्वलादेर्णः प्रत्ययो विकल्पेन भवति । ज्वल ( ज्वल् ) दीप्तौ । वा ज्वलादीति णे ज्वालः । पक्षे ज्वलः । यजादेर्यजादिगणस्य फलं सम्प्रसारणं स्मृत् । यजीं ( यज् ) देवपूजासङ्गतिकरणदानेषु । यजादिवशिति पूर्वस्य स्वृति इयाज । यजादिवचेरिति स्वृति ईजे घटादीनां फलं तु णौ णिप्रत्यये परे ह्रस्वः । घटिष् ( घट् ) चेष्टायाम् । घटादेरितिह्रस्वे । घटयति । ( णौ परेऽजीघटत् सदा ) अयं भावः जासनाटक्राथपिषो हिंसायां इत्यत्र क्राथेत्याकारोपान्त्यनिर्देशादाकारश्रुतावस्य प्रवृत्तेः चौरस्योत्क्राथयतीति घटादेर्ह्रस्व इति ह्रस्वत्वाभावः । अद्यतन्यां तु ह्रस्वघटितमेत रूपं भवति इति अजीघटत्सदेत्यनेन सूचितमिति क्राथेरपि उदचिक्रथादिति ' उपान्त्यस्य ' इति ह्रस्वस्तु न निषिध्यते यस्मिन् प्राप्त एवेति न्यायादिति । पुषादित्वादद्यतन्यां परस्मैपदेऽङ् भवति । दिवाद्यन्तर्गणपुषादिगणस्य फलं परस्मैपदेऽद्यतन्यामङ् प्रत्ययभवनमित्यर्थः । पुषंच ( पुष् ) पुष्टौ । लदिदिति अङि अपुषत । स्वादित्वात् दिवाद्यन्तर्गणस्वादिगणपठितत्वात् क्तयोस्क्तक्तवतुप्रत्यययोस्तकारस्य नकारो भवति । षूङौच् ( सू ) प्राणिप्रसवे । सूयत्यादीति क्तयोस्तस्य नत्वे सूनः सूनवान् । प्वादीनां क्र्याद्यन्तर्गणप्वादिगणपठितधातूनां ह्रस्वो गदितः । पूग्श् ( पू ) पवने प्वादेरिति ह्रस्वे पुनाति पुनीते । ल्वादेः क्र्याद्यन्तर्गणप्वान्तर्गणल्वादिगणपठितधातोस्क्तयोस्तस्य नो भवेत् । लूग्श् ( लू ) छेदने । ऋल्वादेरिति क्तक्तीनां तो नत्वे लूनः लूनवान् लूतिः । युजादयो युजादिगणपठिता धातवश्चुरादिगणे विकल्पेन ज्ञेयाः । चुराद्यन्तर्गणयुजादिगणस्य फलं विकल्पेन णिच्ग्रहणमित्यर्थः । युजण् ( युज् ) सम्पर्चने । युजादेरिति वा णिचि योजयति । पक्षे न्यायविकरणः शव् योजति । मुचादेस्तुदाद्यन्तर्गणमुचादिगणस्य फलं शे शप्रत्यये नागमः । मुच्लृन्ती [ मुच् ] मोक्षणे मुचादीति स्वरात्परे नेन्ते मुञ्चति, मुञ्चते । कुटादित्वात् तुदाद्यन्तर्गणकुटादिगणपठितत्वात् सिचि परे गुणवृद्ध्यभावः । यथा कुटत ( कुट् ) कौटिल्ये । कुटादेरिति ङित्वात् गुणाभावे सिचि अकुटीत् । णूत ( णूत् ) स्तवने । कुटादेरिति ङित्वात् सिचि परस्मायिति वृद्ध्यभावे अनुवीत । चुरादेरदन्तानां चुरादिगणपठितादन्तधातूनामित्यर्थः । गुणो वृद्धिश्च न भवेत् । सुखण् ( सुख ) तत्क्रियायाम् । रचण् (रच्) प्रतियत्ने । रचयति । अत्रात इत्यल्युकः स्वरादेशत्वेन स्थानिवत्त्वाद् गुणवृद्ध्यभावः । अररचत् । असुसुखत् । अत्र समानलोपित्वादसमानलोप इति पूर्वस्य सन्वद्भावो लघोर्दीर्घ इति दीर्घश्च न भवति । सूचण् ( सूच् ) पैशून्ये अत्रोपान्त्यह्रस्वभावः ॥

## ॥ इतिवृत्गणफलनिरूपणम् ॥

## ॥ सकर्मकत्वाकर्मकत्वनिरूपणम् ॥

फलव्यापारयोरेक—निष्ठतायामकर्मकः ।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥ १ ॥

फलस्य गतिनिवृत्त्यादिरूपस्य व्यापारस्य गतिनिवृत्त्यनुकूलव्यापारादिरूपस्य च एकनिष्ठतायामेकाधिकरणवृत्तितायां सत्यां धातुरकर्मको भवति । फलसमानाधिकरणव्यापारबोधकत्वं समानाधिकरणफलावच्छिन्नव्यापारबोधकत्वं वा अकर्मकत्वमिति फलितोऽर्थः । यथा ष्ठां ( स्था ) गतिनिवृत्तौ अत्र फलं गतिनिवृत्तिः व्यापारस्तदनुकूल इति फलं व्यापारश्चोभयं देवदत्तस्तिष्ठति इत्यत्र देवदत्तरूपैकाधिकरणे वर्त्तते । देवदत्तस्तिष्ठतीति कोऽर्थः ?, गतिनिवृत्त्यनुकूलव्यापारवान् देवदत्तः । एवं तयोः फलव्यापारयोः धर्मिभेदेऽधिकरणभेदे भिन्नभिन्नाधिकरणवृत्तितायां सत्यां धातुः सकर्मको भवति । फलव्यधिकरणव्यापारबोधकत्वं व्यधिकरणफलावच्छिन्नव्यापारबोधकत्वं वा सकर्मकत्वमिति फलितोऽर्थः । यथा डुपचीँष् ( पच् ) पाके । देवदत्तस्तण्डुलान् पचति । कोऽर्थः ? तण्डुलनिष्ठविक्लृत्यनुकूलव्यापारवान् देवदत्तः । अत्र फलं विक्लृतिः सा तण्डुलेषु वर्त्तते व्यापारस्तदनुकूलः स देवदत्ते वर्त्तते इति फलव्यापारयोर्भिन्नाधिकरणता ।

अर्थान्तरे वर्त्तमानस्याकर्मकस्यापि सकर्मकत्वं भवति कालाध्वभावदेशापेक्षया च सर्व एव धातवः सकर्मकाः । मासमास्ते । क्रोशो गुडधानाभिर्भूयते । गोदोहं स्वपिति । कुरून् शेते । अर्थान्तरवृत्त्यादिना च सकर्मकस्यापि अकर्मकत्वं भवति यदाह—

धातोरर्थान्तरे वृत्ते-र्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ २ ॥

अर्थान्तरे वर्त्तमानाद्धातोः सकर्मकस्यापि अकर्मिका क्रिया भवति । यथा भारं वहति उद्यच्छतीत्यर्थः, नदी वहति स्रवतीत्यर्थः । कर्मणो धात्वर्थान्तःप्रवेशादकर्मकत्वम् । यथा जीव ( जीव् ) प्राणधारणे जीवति । हदिं ( हद् ) पुरीषोत्सर्गे हदते । अत्र प्राणपुरीषाख्ये कर्मणी धात्वर्थेनैव क्रोडीकृते । कर्मणः प्रसिद्धत्वात् । यथा वृषू ( वृष् ) सेचने । देवो वर्षति । न पुनरत्र । रक्तं वर्षति । पार्थः शरान् वर्षति । कर्मणोऽविवक्षितत्वात् । यथा नेह पच्यते नेह भुज्यते । कर्माविवक्षा

चौदासीन्यनिवृत्तिमात्रपरतया प्रयोगात् । यथा किं करोतीति प्रश्ने पचति पठतीत्यादि प्रत्यवस्थानं नतु भवति विद्यते वेत्यादि तेषामपर्यनुयोज्यत्वात् । यत्तु किं करोतीति प्रश्ने भवतीत्युत्तरं तत्क्रियाख्यकर्मनिबन्धनं नतु बाह्यकर्मापेक्षं भवनं करोतीत्यर्थावगमात् । क्रिया हि सर्वधातूनामान्तरं कर्म । अत एव क्रियाविशेषणानां कर्मत्वं स्मरन्ति । नन्वेवं क्रियाविशेषणादिति योगो व्यर्थः, कर्मणीत्येव द्वितीयासिद्धेः । नैवम् । आन्तरकर्मणा सकर्मणोऽपि अकर्मककार्यप्रतिपत्त्यर्थत्वाद्योगस्य । तेन सुखं सुप्त इत्यादौ कर्त्तरि क्तः सिद्धः । सुखं स्थातेत्यादौ कृन्निमित्ता षष्ठी न भवतीति । अत एव सकर्मकाकर्मकव्यवहारो द्रव्यकर्मनिमित्त इत्युच्यते । यदाह— ॥ सकर्मकाकर्मकत्वं द्रव्यकर्मनिबन्धनम् ॥



## ॥ अथ द्विकर्मकगणनानिरूपणम् ॥

**नीहृवहिकृषो ण्यन्ता दुहिब्रूपृच्छिभिक्षिचिरुधिशास्वर्थाः ।**
**पचियाचि दण्डिकृग्रहमथिजिप्रमुखा द्विकर्माणः ॥ १ ॥**

इमे सर्वे धातवो द्विकर्मका विज्ञेयाः । णींञ् ( नी ) प्रापणे । गामजां नयति । हृंञ् (हृ) हरणे । निवासं हरति घासं । वहीं (वह्) प्रापणे । ग्रामं भारं वहति । कृषं (कृष्) विलेखने । कृषींत् [ कृष् ] विलेखने । ग्रामं बलिवर्दं कर्षति । ण्यन्ता इति । घ्रां ( घ्रा ) गन्धोपादाने । जिनदासं पुष्पाणि घ्रापयति । दुहिब्रूपृच्छिभिक्षिचि रुचिशास्धातूनामर्था इव अर्था येषां ते तथा । दुहिप्रभृतीनां षण्णां धातूनां येऽर्थाः प्रतिपादिताः तादृशा अर्था येषां धातूनां भवन्ति तेऽपि धातवो द्विकर्मका विज्ञेयाः । दुहींक् ( दुह् ) क्षरणे । गां दोग्धि पयः । ब्रूंगक् ( ब्रू ) व्यक्तायां वाचि । भव्यान् धर्मं ब्रूते । प्रच्छंत् ( प्रच्छ् ) ज्ञीप्सायाम् । जनं मार्गं पृच्छति । भिक्षि [ भिक्ष् ) याञ्चायाम् । भिक्षते गां राजानम् । चिंग्ट् [ चि ] चयने । वृक्षं पुष्पाणि अवचिनोति । रुधृंपी ( रुध् ) आवरणे । शठं गृहमवरुणद्धि । शासूक् [ शास् ] अनुशिष्टौ । मनुष्यं धर्मं शास्ति डुपचींष् ( पच् ) पाके तण्डुलानोदनं पचति । याचिरत्रानुनयार्थस्तेन भिक्ष्यर्थाद्भेदः । डुयाचृग् ( याच् ) याञ्चायाम् । शठं धर्मं याचतेऽनुनयतीत्यर्थः दण्डण् [ दण्ड् ] दण्डनिपाते । देवदत्तं शतं दण्डयति । डुकृंग् ( कृ ) करणे । मृदं घटं

करोति। ग्रहीश् [ ग्रह् ] उपादाने। द्रव्यं धान्यं प्रतिगृह्णाति। मन्थश् [ मन्थ् ] विलोडने। समुद्रममृतमथ्नात्। जिं ( जि ) अभिभवे। देवदत्तं शतं जयति। प्रमुखग्रहणात् मुषश् [ मुष् ] स्तेये। गोविन्दं शतं मुष्णाति। एतद्व्याख्या तु मतान्तरीयोक्तकारिकानुसारेण कृता। हेमचन्द्रसूरीशानैस्तु ॥ तच्च ( द्विविधं कर्म तु ) द्विकर्मकेषु दुहिभिक्षिरुधिमच्छिचिग्रूट्शास्वब्रूर्थेषु याचि जयतिप्रभृतिषु नीहृकृषवहेषु च भवति। अत्रोदाहरणानि तु निरुक्तान्येव। अत्रोक्तातिरिक्तधातूनामुपरि गणना कृता। सा अत्रैव समवसरति। इदं तस्या उपलक्षणं मतभेदो वेति स्वयमूह्यम्।

## ॥ इति द्विकर्मकगणनानिरूपणम् ॥

---

## ॥ अथ गौणमुख्यकर्मनिरूपणम् ॥

न्यादीनां कर्मणो मुख्यं प्रत्ययो वक्ति कर्मजः।
नीयते गौर्द्विजैर्ग्रामं भारो ग्राममथोह्यते ॥ १ ॥
गौणं कर्म दुहादीनां प्रत्ययो वक्ति कर्मजः।
गौः पयो दुह्यतेऽनेन शिष्योऽर्थं गुरुणोच्यते ॥ २ ॥

कर्म द्विविधं मुख्यं गौणञ्च। तत्र यदर्थं क्रिया आरभ्यते तत्प्रधानम्। तत्सिद्ध्यै यत्क्रियया व्याप्यते गवादि तदप्रधानम्। अन्यत्सर्वं स्फुटम्। किञ्च गत्यर्थानामकर्मकाणां तु णिगन्तानां प्रधाने एव कर्मणि गम्यते मैत्रो ग्रामम्। आस्यते मासं मैत्रः। बोधाहारार्थशब्दकर्मकाणां तु णिगन्तानामुभयत्र बोध्यते शिष्यो धर्मम्। बोध्यते शिष्यं धर्मो वा। भोज्यतेऽतिथिमोदनः। भोज्यतेऽतिथिरोदनम्। पाठ्यते शिष्यो ग्रन्थम्। पाठ्यते शिष्यं ग्रन्थो वा।

## ॥ इति गौणमुख्यकर्मनिरूपणम् ॥

---

## ॥ अथ धातूपसर्गजन्यभेदप्रकाशनिरूपणम् ॥

बीजकालेषु सम्बद्धा यथा लाक्षारसादयः।
वर्णादिपरिणामेन फलानामुपकुर्वते ॥ १ ॥
बुद्धिस्थादभिसम्बन्धा-त्तथा धातूपसर्गयोः।
अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥ २ ॥

व्याख्या—अथ किं धातुः पूर्वमुपसर्गेण युज्यते उत साधनेनेति ! साधनं हि क्रियां निवर्त्तयति [ साध्यत्ववैशिष्ट्येन बोधयतीति तामुपसर्गो विशिनष्टि ( स्वद्योत्यविशेषणवैशिष्ट्येन बोधयतीत्यर्थः ] अतः पूर्वं साधनेन साधनं कारकम् तदभिधायि कार्येण, युज्यत इति तद्युक्तम् पूर्वं हि धातोः साधनेन सम्बन्धे आस्यते गुरुणा इत्यकर्मकः उपास्यते गुरुरिति सकर्मकः केन स्यात्.

यस्माद्विशिष्टैव क्रिया साधनेन साध्यते नतु साधनाल्लब्धस्वरूपान्यतो विशेषं लभते तस्मात् पूर्वमुपसर्गेण युज्यते–इति युक्तम् । न च प्रत्ययसम्बन्धमन्तरेण क्रियाविशेषस्यानभिव्यक्तेर्न धातोः पूर्वमुपसर्गेण सम्बन्धो युज्यते इति वाच्यम् ? यतः—

**बीजकालेषु सम्बद्धा यथा लाक्षारसादयः**
**वर्णादिपरिणामेन फलानामुपकुर्वते ॥ १ ॥**

बीजकालेषु-बीजोत्पत्तिसमयेषु सम्बद्धाः सम्पृक्ताः, ( बीजैरिति शेषः ) लाक्षारसादयः–जतुरसप्रभृतयः फलानां वर्णादिपरिणामेन रूपरसादिपरिणमनद्वारा, यथा उपकुर्वते ।

**( बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः ॥**
**अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥ १ ॥ )**

तथा धातूपसर्गयोः बुद्धिस्थाद् ( बुद्धिविषयीकृतात्, ) अभिसम्बन्धात् भेदः ( उपसर्गार्थकृतो विशेषः ) अभ्यन्तरीकृतः [ बुद्धिस्थीकृतः, धातुनेति शेषः, पदकाले उपसर्गसंज्ञकशब्दप्रयोगकाले प्रकाशते. श्रोतुरिति शेषः ॥ इति अङ्कुरोत्पत्तिसमये लाक्षारसादिसेकेन फलानां रूपरसादिवैलक्षण्यं भवति इति लोकप्रसिद्धिः तत्र यथा लाक्षारसादीनां पूर्वकालिकसम्बधेन जायमाना विलक्षणता फलकाले प्रकाशते तथा पूर्वकालिकोपसर्गसम्बन्धेन जायमानः उपसर्गार्थकृतो विशेषः उपसर्गप्रयोगकाले प्रकाशते–एवं च पूर्वमुपसर्गयोगो नाम तदर्थसम्बन्धः तत उपसर्गशब्दात् पूर्वं साधनकार्ययोगः तत उपसर्गसंज्ञकशब्दप्रयोग इति तात्पर्यम्, इत्यलम् ।

---

## ॥ अथ षोपदेशनिरूपणम् ॥

**स्वरदन्त्यपरसकारादयः स्मिस्विदिस्वदिस्वञ्जिस्वपयश्च ।**

षोपदेशाः सृपि, सृजि, स्त्या, स्तॄ, स्तृ, सृ, सेकृवर्जम् ॥ १ ॥

स्वरा अवर्णादयो दन्त्या लृवर्णतवर्गलसास्ते परा यस्मात्तादृशो यः सकारः स आदौ येषां ते स्वरदन्त्यपरसकारादयः स्वरपरसादयः दन्त्यपरसादयश्च धातवः षोपदेशा ज्ञेयाः उत्तरदलदर्शितान् विहाय । यथा षहि ( सह् ) मर्षणे । ष्ठां (स्था) गतिनिवृत्तौ । उक्तलक्षणेनाग्रहादाह-स्मीत्यादि-स्मिप्रभृतयश्च षोपदेशा विज्ञेयाः । ष्मिङ् ( स्मि) ईषद्धसने । ञिष्विदाङ् ( स्विद् ) मोचने च । ष्विदांच् [स्विद् ] गात्रप्रक्षरणे । ष्वदि ( स्वद् ) आस्वादने । ष्वञ्जित् ( स्वञ्ज् ) सङ्गे । ञिष्वपंक् ( स्वप् ) शये । सृपिप्रभृतीन् विहाय । ते चेमे । सृप्लृं ( सृप् ) गतौ । सृजिच् [ सृज् ] विसर्गे । सृजंत् ( सृज् ) विसर्गे । स्त्यैं ( स्त्यै ) संघाते । स्तॄंग्श् (स्तॄ) आच्छादने । स्तृंग्ट् ( स्तृ ) आच्छादने । सृं [ सृ ] गतौ । सेकृङ् ( सेकृ ) गतौ । षोपदेशफलं तु असीषहत् इत्यादौ षत्वकरणम् । स्मिप्रभृतिभिः साहचर्यादेक-स्वराणामेव षोपदेशस्मृतिः । अत एव सूत्रसत्रसंग्रामसामसमाजस्थूलस्तनस्तेनस्तो-मसुखानामषोपदेशत्वात् सोसूत्र्यते सिसत्रयिषते इत्यादौ षत्वं न भवति ।

॥ इति षोपदेशप्रकरणम् ॥

—— :०: ——

## ॥ अथ णोपदेशनिरूपणम् ॥

सर्वे च नादयो णोपदेशा नृति नन्दि नर्दि नशि नाटि नक्कि नाधृ नाथृ नॄवर्जम् । येषां धातूनामादौ नकारो भवेत्ते णोपदेशा विज्ञेयाः, नृतिप्रभृतिन् विहाय ते चेमे ॥ नृतैच् ( नृत् नर्तने । टुनदु ( नन्द् ) समृद्धौ नर्द ( नर्द् ) शब्दे । नशौच् ( नश् ) अदर्शने । नाटीति नटण् ( नट् ) अवस्यन्दने इत्यस्यैवात्र वर्जनं नतु णट् लट् नृतौ । णट् (नट्) नतौ एतयोः । नक्कण् नक्क्) नाशने । नाधृङ् (नाध्) नाथङ्वत् । नाथृङ् (नाथ्) उपतापैश्वर्याशीःषु च । नॄ नये । नॄश् (नॄ) नये एतद्-व्यतिरिक्ता नकारादयः सर्वे णोपदेशाः यथा णख (नख्) गतौ णोपदेशफलन्तु प्र-णखतीत्यादौ णत्वम् । ननु नख [नख्] गतौ इत्यस्य अणोपदेशत्वात् कथमत्र न वर्जनमिति चेदुच्यते नख णख इति पाठसामर्थ्यादेव अणोपदेशत्वमेवान्यत्रापि ।

॥ इति णोपदेशप्रकरणम् ॥

## ॥ अथ धात्वर्थविशेषनिरूपणम् ॥

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।

विहाराहारसंहार प्रहारप्रतिहारवत् ॥ १ ॥
धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते ।
तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते ॥ २ ॥

उपसर्गेण ॥

प्रपरापसमन्ववनिर्दुरभि–व्यधिसूदतिनिप्रतिपर्यपयः ।
उप आङिति विंशतिरेष सखे ! उपसर्गगणः कथितः कविभिः ॥ १ ॥

इत्याद्यन्यतमेन धात्वर्थो धातुपाठे य उक्तोऽर्थः स बलात्प्रतीतिसामर्थ्यादन्यत्रान्यस्मिन्नर्थे नीयते स्थाप्यते पर्यवसितो भवतीत्यर्थः। अत्र ये उपसर्गस्य द्योतकत्वमामनन्ति तन्मते तु अन्योऽप्यर्थस्तस्य धातोरेव ये तु वाचकत्वमाश्रयन्ति तन्मते धातुसम्बन्धात्तमन्यमर्थमुपसर्ग एवाभिधत्ते तदेवाह–हृंग् ( हृ ) हरणे। अस्य हरणार्थत्वेऽपि विहारः क्रीडा समीचीनगमनं वा॥ आहारो भोजनम्। संहारो विनाशः। प्रहारस्ताडनम्। प्रतिहारः द्वाःस्थकर्म। इत्यादौ उक्तादितिविविधार्थावगतेः। कश्चिदुपसर्गो धात्वर्थं बाधते। यथा–षिधू ( सिधू ) गत्याम्। प्रतिषेधति। अत्र गत्यर्थं बाधित्वा निषेधार्थमभिदधाति। कश्चित्तं मौलधात्वर्थमनुवर्त्तते यथा अधीयते। अत्र इंङ्क् (इ) अध्ययने। अयमधिनाऽवश्यंभावी योगो न चार्थविशेषः। अन्य उपसर्गस्तमेव मूलधात्वर्थं विशिनष्टि विशिष्टतामापादयति। यथा डुंपचींष् ( पच् ) पाके प्रपचति प्रकृष्टं प्रकर्षं वा पचतीत्यर्थः। अन्य उपसर्गोऽनर्थक एव प्रयुज्यते। गम्लृं ( गम् ) गतौ। अधिगच्छति। अत्र न धात्वर्थबाधो न वा धात्वर्थविशेषता न वा गम्–धातुनाऽवश्यंभावी योग इति।

उपसर्गेणैकेन द्वाभ्यां त्रिभिरपि धातुः ॥
संयुज्यतेऽर्थसिद्ध्यै चतुर्भिरपि युज्यते कश्चित् ॥१॥
एकेन यथा विहरति युग्मेनाभ्यवहरत्यनलैः ॥
समभ्यवहरति समभिव्याहरतीत्यब्धिसङ्ख्यैश्च ॥२॥

॥ इति धात्वर्थविशेषनिरूपणम् ॥

---

## ॥ अथ अनुस्वारनिरूपणम् ॥

नकारजावनुस्वार–पञ्चमौ झुटि धातुषु।
सकारजः शकारश्चे–षाट्टवर्गस्तवर्गजः ॥ १ ॥

धातुषु धुटि धुडादौ वर्णे परे सति योऽनुस्वारो वर्गपञ्चमाक्षरो वा दृश्यते स नकारस्थाने जात इति वेदितव्यम् । दंशं ( दन्श्-दंश् ) दशने दशति । अत्र यदि नकारजोऽनुस्वारो न भवेत्तर्हि दंशसञ्ज इति लुग्न स्यात् तुम्फत् (तुनफ्-तुम्फ्) तृप्तौ । तुफति । अत्रापि नकारजो मकाररूपपञ्चमो वर्णो न स्यात्तर्हि नो व्यञ्जनस्येति लुग्न स्यात् । एवं चे चकारे परे यः शकारः स सकारजः सकारस्थाने जातः । यथा ॥ पस्च ( सस्चू-सश्चू ) गतौ । सश्चति । अत्र शकारः सकारस्थाने जातः । षीत् रकारात् षकाराच्च परो यः टवर्गः स तवर्गो जातः । यथा ऊर्णुग्क् (ऊर्नु ऊर्णु) आच्छादने । ऊर्णुनाव । अत्र रकारात्परो यो णकारः स नकारस्थाने जातः अन्यथा ऊर्णुणाव इत्येव स्यात् । ष्ठां ( स्था ) गतिनिवृत्तौ । अत्र षकारस्तु षोपदेशार्थस्तदनन्तरं ठकाररूपटवर्णस्थकाररूपतवर्गजातः । एवं षींद् इत्यत्र पूर्वार्थे पञ्चमीविवक्षायां अट्ड ( अद्ड्-अड्ड् ) अभियोगे अड्डति इत्यादिकमपि भावनीयम् ।

## ॥ इत्यनुस्वारादिनिरूपणम् ॥

---

इतिश्री तपोगच्छाधिराज सर्व तन्त्रस्वतन्त्र शासनसम्राट् सूरिचक्र चक्रवर्त्ति जगद्गुरुतीर्थसंरक्षणप्रवणविद्यापीठादिप्रस्थानपञ्चकसमाराधकसंविग्नशाखीयभट्टारकाचार्यवर्य श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारान्तेवासिन्यायवाचस्पतिशास्त्रविशारदाचार्य श्रीविजयदर्शनसूरिशिष्यमुनिगुणविजयविरचितायां

हैमधातुमालायां

## ॥ द्वितीयो विभागः ॥

## ॥ ग्रन्थप्रशस्तिः ॥

पाताले वत्सराणां व्यदधत धरणेन्द्रः सहस्राण्यशीतिं ।
यावद् यस्याः सपर्यां कृतसुकृततिर्भव्यभद्रप्रदायाः ॥
साक्षात्सा कल्पवल्ली प्रणमितशिरसः पातु बद्धाञ्जलीन्नः ।
श्रीमत्पार्श्वस्य मूर्तिः प्रकटितमहिमा स्तम्भनाधीश्वरस्य ॥ १ ॥

शास्त्रोक्तानघसार्वपद्धतितपागच्छाधिपत्यं वहन् ।
सद्दृग्बोधविशुद्धशीलचरणप्रौढप्रभावाद्भुतः ॥
निःशेषश्रुतयोगसम्पदचलः शश्वत्परार्थोद्यतः ।
स श्रीमाञ्जयतीह सूरिमुकुटः श्रीनेमिसूरीश्वरः ॥ २ ॥

दर्शनोदयनामानौ यत्पट्टोदयभूधरे ।
पुष्पदन्ताविवाचार्यौ राजेते शास्त्रपारगौ ॥ ३ ॥

दर्शनसूरिशिष्यः स-त्प्रयत्नेन सुबोधिनीम् ।
धातुमालामीमां हैमीं गुणविजय आतनोत् ॥ ४ ॥

स्वर्गगतस्य तस्येयं शुद्धचारित्रशालिनः ।
कृतिरारन्दमासेक नन्यतां बोधकांक्षिणाम् ॥ ५ ॥

सूरिणा नन्दनेनेयं प्रभूतं परिवर्द्धिता ।
उदयसूरिशिष्येण नेमिसूरीशशासनात् ॥ ६ ॥

नेमिसूरीशशिष्येण गीर्वाणविजयेन च ।
निर्जेनरोपकाराय यत्नतः परिशोधिता ॥ ७ ॥

सिद्धयश्वाङ्कमहीप्रमाणकलिते संवत्सरे वैक्रमे ।
भाद्रस्योज्ज्वलपञ्चमीशुभदिने श्रीस्तम्भतीर्थे वरे ॥
सम्पूर्त्तिं गमितेयमासुरनगं जीयात्प्रमाणानुगा ।
शोध्या च स्खलनान्विता यदि भवेत् प्राज्ञैः परार्थोद्यमैः ॥ ८ ॥

धातुमालामिमां कृत्वा विजयेन गुणादिना ॥
यत्पुण्यमर्जितं तेन भव्योऽस्तु गुणभाजनम् ॥ ९ ॥

इति श्री सर्वतन्त्रस्वतन्त्र शासनसम्राट् सूरि-
चक्रचक्रवर्त्ति जगद्गुरु तीर्थसंरक्षणप्रवण-
विद्यापीठादिप्रस्थानपञ्चकसमाराधक-
संविग्नशाखीय प्रातःस्मरणीय
भट्टारकाचार्यवर्य श्रीमद्विजयनेमि-
सूरीश्वरपट्टालङ्कारान्तेवासि
न्यायवाचस्पति शास्त्रविशारदाचार्य
श्रीविजयदर्शनसूरिशिष्यरत्न-
मुनिगुणविजय
विरचिता
**हैमधातुमाला**
**संपूर्णा**

॥ ॐ अर्हम् नमः ॥

॥ श्री सर्वलब्धिसम्पन्न श्रीगौतमस्वामिने नमः ॥

सर्वतन्त्रस्वतन्त्रशासनसम्राट्सूरिचक्रचक्रवर्त्ति-जगद्गुरु-तपागच्छाधिपतिभट्टारकाचार्य-श्रीमद्विजयनेमिसूरि भगवद्भ्यो नमः ॥

# ॥ अथ बालसंस्कृतदीपिका. ॥

## ॥ शब्दरूपावलिः ॥

जिनो मुनिः करी भूभृत् भानुः कर्ता च चंद्रमाः ॥
तस्थिवान् भगवानात्मा दशैते पुंसि नायकाः ॥ १ ॥

### अकारांतः पुल्लिंगो जिनशब्दः

| ए० | द्वि० | ब० | विभ० |
|---|---|---|---|
| जिनः | जिनौ | जिनाः | प्र. |
| जिनम् | ,, | जिनान् | द्वि. |
| जिनेन | जिनाभ्याम् | जिनैः | तृ. |
| जिनाय | ,, | जिनेभ्यः | च. |
| जिनात् | ,, | ,, | पं. |
| जिनस्य | जिनयोः | जिनानाम् | ष. |
| जिने | ,, | जिनेषु | स. |
| हे जिन | हे जिनौ | हे जिनाः | . |

एवं देव, पुत्र, शुक, दास, वीर, भक्त, सूर्य, राम इत्यादि.

### इकारांतः पुल्लिंगो मुनिशब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| मुनिः | मुनी | मुनयः | प्र. |
| मुनिम् | मुनी | मुनीन् | द्वि. |
| मुनिना | मुनिभ्याम् | मुनिभिः | तृ. |
| मुनये | ,, | मुनिभ्यः | च. |
| मुनेः | ,, | ,, | पं. |
| मुनेः | मुन्योः | मुनीनाम् | ष. |
| मुनौ | ,, | मुनिषु | स. |
| हे मुने | हे मुनी | हे मुनयः | सं. |

एवं अरि, ऋषि, रवि, कवि, नृपति, हरि, कपि, पवि, इत्यादि.

### इन्नंतः पुल्लिंगः करिन्शब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| करी | करिणौ | करिणः | प्र. |
| करिणम् | करिणौ | करिणः | द्वि. |
| करिणा | करिभ्याम् | करिभिः | तृ. |
| करिणे | करिभ्याम् | करिभ्यः | च. |
| करिणः | करिभ्याम् | करिभ्यः | प. |
| करिणः | करिणोः | करिणाम् | ष. |
| करिणि | करिणोः | करिषु | स. |
| हे करिन् | हे करिणौ | हे करिणः | सं. |

एवं पक्षिन्, रोगिन्, योगिन्, स्वामिन्, अपराधिन्, धनिन्, हस्तिन्, इत्यादि.

### तकारांतः पुल्लिंगो भूभृतशब्दः

| ए० | द्वि | ब० | वि० |
|---|---|---|---|
| भूभृत् | भूभृतौ | भूभृतः | प्र. |
| भूभृतम् | भूभृतौ | भूभृतः | द्वि. |
| भूभृता | भूभृद्भ्याम् | भूभृद्भिः | तृ. |
| भूभृते | भूभृद्भ्याम् | भूभृद्भ्यः | च. |
| भूभृतः | भूभृद्भ्याम् | भूभृद्भ्यः | पं. |
| भूभृतः | भूभृतोः | भूभृताम् | ष. |

| | | | |
|---|---|---|---|
| भूभृति | भूभृतोः | भूभृत्सु | स. |
| हे भूभृत् | हे भूभृतौ | हे भूभृतः | सं. |

एवं मरुत्, हरित्, ददत्, दधत् शासत्, चकासत्, तमोनुद् जाग्रत्, इत्यादि.

## उकारान्तः पुल्लिंगो भानुशब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| भानुः | भानू | भानवः | प्र. |
| भानुम् | भानू | भानून् | द्वि. |
| भानुना | भानुभ्याम् | भानुभिः | तृ. |
| भानवे | भानुभ्याम् | भानुभ्यः | च. |
| भानोः | भानुभ्याम् | भानुभ्यः | पं. |
| भानोः | भान्वोः | भानूनाम् | ष. |
| भानौ | भान्वोः | भानुषु | स. |
| हे भानो | हे भानू | हे भानवः | सं. |

एवं गुरु, साधु, बाहु, शम्भु, मनु, शिशु, वायु, सिन्धु, इत्यादि.

## ऋकारांतः पुलिंगः कर्तृशब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| कर्ता | कर्तारौ | कर्तारः | प्र० |
| कर्तारं | कर्तारौ | कर्तॄन् | द्वि. |
| कर्त्रा | कर्तृभ्याम् | कर्तृभिः | तृ. |
| कर्त्रे | कर्तृभ्याम् | कर्तृभ्यः | च. |
| कर्तुः | कर्तृभ्याम् | कर्तृभ्यः | पं. |
| कर्तुः | कर्त्रोः | कर्तॄणाम् | ष. |
| कर्तरि | कर्त्रोः | कर्तृषु | स. |
| हे कर्तः | हे कर्तारौ | हे कर्तारः | सं. |

एवं दातृ, वक्तृ, श्रोतृ, सवितृ, भोक्तृ. धातृ, भर्तृ, गन्तृ इत्यादि.

## सकारांतः पुल्लिंग द्रमस्शब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| चंद्रमाः | चंद्रमसौ | चंद्रमसः | प्र. |
| चंद्रमसम् | चंद्रमसौ | चंद्रमसः | द्वि. |
| चंद्रमसा | चंद्रमोभ्याम् | चंद्रमोभिः | तृ. |
| चंद्रमसे | चंद्रमोभ्याम् | चंद्रमोभ्यः | च. |
| चंद्रमसः | चंद्रमोभ्याम् | चंद्रमोभ्यः | पं. |
| चंद्रमसः | चंद्रमसोः | चंद्रमसाम् | ष. |
| चंद्रमसि | चंद्रमसोः | चंद्रमस्सु | स. |
| हे चंद्रमः | हे चंद्रमसौ | हे चंद्रमसः | सं. |

एवं वेधस्, सुमनस्, दुर्मनस्, दिवौकस्, दर्वासस्, वनौकस्, इत्यादि.

## वसुप्रत्ययांतः पुल्लिंगस्तस्थिवस्शब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| तस्थिवान् | तस्थिवांसौ | तस्थिवांसः | प्र. |
| तस्थिवांसम् | तस्थिवांसौ | तस्थुषः | द्वि. |
| तस्थुषा | तस्थिवद्भ्याम् | तस्थिवद्भिः | त. |
| तस्थुषेः | तस्थिवद्भ्याम् | तस्थिवद्भ्यः | पं. |
| तस्थुषः | तस्थुषोः | तस्थुषाम् | प. |
| तस्थुषि | तस्थुषोः | तस्थिवत्सु | स. |
| हे तस्थिवन् | हे तस्थिवांसौ | हे तस्थिवांसः | सं. |

एवं सेदिवस्, जग्मिवस्, जगन्वस् विद्वस्, अध्यूषिवस्, चक्रिवस्, इत्यादयः

## मतुप्रत्ययांतः पुल्लिंगो भगवत्शब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| भगवान् | भगवंतौ | भगवंतः | प्र. |
| भगवंतम् | भगवंतौ | भगवतः | द्वि. |
| भगवता | भगवद्भ्याम् | भगवद्भिः | तृ. |
| भगवते | भगवद्भ्याम् | भगवद्भ्यः | च. |
| भगवतः | भगवद्भ्याम् | भगवद्भ्यः | पं. |
| भगवतः | भगवतोः | भगवताम् | प. |
| भगवति | भगवतोः | भगवत्सु | स. |

| | | | |
|---|---|---|---|
| हे भगवन् | हे भगवंतौ | हे भगवंतः | सं. |

एवं भवत्, बुद्धिमत्, श्रुतिमत्, श्रीमत् विद्यावत्, धनवत्, गुणवत् धीमत् इत्यादयः

### नकारांतः पुल्लिंग आत्मन्शब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| आत्मा | आत्मानौ | आत्मानः | प्र. |
| आत्मानम् | आत्मानौ | आत्मनः | द्वि. |
| आत्मना | आत्मभ्याम् | आत्मभिः | तृ. |
| आत्मने | आत्मभ्याम् | आत्मभ्यः | च. |
| आत्मनः | आत्मभ्याम् | आत्मभ्यः | पं. |
| आत्मनः | आत्मनोः | आत्मनाम् | ष. |
| आत्मनि | आत्मनोः | आत्मसु | स. |
| हे आत्मन् | हे आत्मानौ | हे आत्मानः | सं. |

एवं ब्रह्मन्, यज्वन्, सुशर्मन्, अश्मन्, सुसब्रन्, इत्यादयः

### इति पुल्लिंगशब्दाः

---

रमा रुचिर्नदी धेनुर्वाग् धीः सरिदनंतरम् ॥
क्षुत्प्राट्ट् च शरच्चैव दर्शते स्त्रीषु नायकाः ॥२॥

### आबंतः स्त्रीलिंगो रमाशब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| रमा | रमे | रमाः | प्र. |
| रमां | रमे | रमाः | द्वि. |
| रमया | रमाभ्याम् | रमाभिः | तृ. |
| रमायै | रमाभ्याम् | रमाभ्यः | च. |
| रमायाः | रमाभ्याम् | रमाभ्यः | पं. |
| रमायाः | रमयोः | रमाणाम् | ष. |
| रमायाम् | रमयोः | रमासु | स. |
| हे रमे | हे रमे | हे रमाः | सं. |

एवं आज्ञा, आशा, कन्या, कृपा, माला, शाला, लता विद्या इत्यादयः

### इकारांतः स्त्रीलिंगो रुचिशब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| रुचिः | रुची | रुचयः | प्र. |
| रुचिम् | रुची | रुचीः | द्वि. |
| रुच्या | रुचिभ्याम् | रुचिभिः | तृ. |
| रुच्यै, रुचये | रुचिभ्याम् | रुचिभ्यः | च. |
| रुच्याः, रुचेः | रुचिभ्याम् | रुचिभ्यः | पं. |
| रुच्याः रुचेः | रुच्योः | रुचीनाम् | ष. |
| रुच्याम्, रुचौ | रुच्योः | रुचिषु | स. |
| हे रुचे | हे रुची | हे रुचयः | सं. |

एवं कीर्ति, बुद्धि, सिद्धि, शांति, मुक्ति भक्ति, भूति, प्रीति इत्यादयः

### ईबंतः स्त्रीलिंगो नदीशब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| नदी | नद्यौ | नद्यः | प्र. |
| नदीम् | नद्यौ | नदीः | द्वि. |
| नद्या | नदीभ्याम् | नदीभिः | तृ. |
| नद्यै | नदीभ्याम् | नदीभ्यः | च. |
| नद्याः | नदीभ्याम् | नदीभ्यः | पं. |
| नद्याः | नद्योः | नदीनाम् | ष. |
| नद्याम् | नद्योः | नदीषु | स. |
| हे नदि | हे नद्यौ | हे नद्यः | सं. |

एवं कुमारी, दासी, सखी, जननी, महिषी, रजनी, शची, इन्द्राणी इत्यादयः

### उकारांतः स्त्रीलिंगो धेनुशब्दः

| ए० | द्वि० | व० | वि० |
|---|---|---|---|
| धेनुः | धेनू | धेनवः | प्र. |
| धेनुम् | धेनू | धेनूः | द्वि. |
| धेन्वा | धेनुभ्याम् | धेनुभिः | तृ. |
| धेन्वै, धेनवे | धेनुभ्याम् | धेनुभ्यः | च. |
| धेन्वाः धेनोः | धेनुभ्याम् | धेनुभ्यः | पं. |
| धेन्वाः धेनोः | धेन्वोः | धेनूनाम् | ष. |
| धेन्वां, धेनौ | धेन्वोः | धेनुषु | स. |
| हे धेनो | हे धेनू | हे धेनवः | सं. |

एवं रज्जु, हनु, तनु, इत्यादयः

### चकारांतः स्त्रीलिंगो वाक्शब्दः

| ए० | द्वि० | व० | वि० |
|---|---|---|---|
| वाक्, वाग् | वाचौ | वाचः | प्र. |
| वाचम् | वाचौ | वाचः | द्वि. |
| वाचा | वाग्भ्याम् | वाग्भिः | तृ. |
| वाचे | वाग्भ्याम् | वाग्भ्यः | च. |
| वाचः | वाग्भ्याम् | वाग्भ्यः | पं. |
| वाचः | वाचोः | वाचाम् | ष. |
| वाचि | वाचोः | वाक्षु | स. |
| हे वाक्, हे वाग् | हे वाचौ | हे वाचः | सं. |

एवं शुच्, पयोमुच्, स्रज्, दृश्, हुतभुज्, इत्यादयः

### ईकारांतः स्त्रीलिंगो धीशब्दः

| ए० | द्वि० | व० | वि० |
|---|---|---|---|
| धीः | धियौ | धियः | प्र. |
| धियम् | धियौ | धियः | द्वि. |
| धिया | धीभ्याम् | धीभिः | तृ. |
| धियै, धिये | धीभ्याम् | धीभ्यः | च. |
| धियाः, धियः | धीभ्याम् | धीभ्यः | पं. |
| धियाः धियः | धियोः | धियां, धीनां | ष. |
| धियां, धियि | धियोः | धीषु | स. |
| हे धीः | हे धियौ | हे धियः | सं. |

एवं ह्री, श्री, सुश्री, सुधी, भी, इत्यादयः

### तकारांतः स्त्रीलिंगः सरित्शब्दः

| ए० | द्वि० | व० | वि० |
|---|---|---|---|
| सरित् | सरितौ | सरितः | प्र. |
| सरितम् | सरितौ | सरितः | द्वि. |
| सरिता | सरिद्भ्याम् | सरिद्भिः | तृ. |
| सरिते | सरिद्भ्याम् | सरिद्भ्यः | च. |
| सरितः | सरिद्भ्याम् | सरिद्भ्यः | पं. |
| सरितः | सरितोः | सरिताम् | ष. |
| सरिति | सरितोः | सरित्सु | स. |
| हे सरित्-द् | हे सरितौ | हे सरितः | सं. |

एवं हरित्, आवृत्, इत्, विद्युत्, इत्यादयः

### धकारांतः स्त्रीलिंगः क्षुध्शब्दः

| ए० | द्वि० | व० | वि० |
|---|---|---|---|
| क्षुत्-क्षुद् | क्षुधौ | क्षुधः | प्र. |
| क्षुधम् | क्षुधौ | क्षुधः | द्वि. |
| क्षुधा | क्षुद्भ्याम् | क्षुद्भिः | तृ. |
| क्षुधे | क्षुद्भ्याम् | क्षुद्भ्यः | च. |
| क्षुधः | क्षुद्भ्याम् | क्षुद्भ्यः | पं. |
| क्षुधः | क्षुधोः | क्षुधाम् | ष. |
| क्षुधि | क्षुधोः | क्षुत्सु | स. |
| हे क्षुत्-क्षुद् | हे क्षुधौ | हे क्षुधः | सं. |

एवं समिध्, युयुध् इत्यादयः

षकारान्तः स्त्रीलिङ्गः प्रावृष् शब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| प्रावृट्-ड् | प्रावृषौ | प्रावृषः | प्र. |
| प्रावृषम् | ,, | ,, | द्वि |
| प्रावृषा | प्रावृड्भ्याम् | प्रावृड्भिः | तृ. |
| प्रावृषे | प्रावृड्भ्याम् | प्रावृड्भ्यः | च. |
| प्रावृषः | प्रावृड्भ्याम् | प्रावृड्भ्य. | पं. |
| प्रावृषः | प्रावृषोः | प्रावृषाम् | ष. |
| प्रावृषि | प्रावृषोः | प्रावृट्सु | स. |
| हे प्रावृट्-ड् | हे प्रावृषौ | हे प्रावृषः | सं. |

एवं त्विष्, द्विष्, रत्नमुष्, इत्यादयः

दकारांतः स्त्रीलिंगः शरद्शब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| शरत्-द् | शरदौ | शरदः | प्र. |
| शरदम् | शरदौ | शरदः | द्विः |
| शरदा | शरद्भ्याम् | शरद्भिः | तृ. |
| शरदे | शरद्भ्याम् | शरद्भ्यः | च. |
| शरदः | शरद्भ्याम् | शरद्भ्यः | पं. |
| शरदः | शरदोः | शरदाम् | ष. |
| शरदि | शरदोः | शरत्सु | स. |
| हे शरत्-द् | हे शरदौ | हे शरदः | सं. |

एवं आपद्, तमोनुद् विपद्, सम्पद्,

इति स्त्रीलिंगाः

ज्ञानं दधि पयो वर्म धनुर्वारि जगत्तथा ॥
मधु नाम मनोहारि दर्शते तु नपुंसके । ३॥

अकारांतो नपुंसकलिंगो ज्ञानशब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| ज्ञानम् | ज्ञाने | ज्ञानानि | प्र. |
| ज्ञानम् | ज्ञाने | ज्ञानानि | द्वि. |

शेषं पुल्लिंगजिनशब्दवत्.

| | | | |
|---|---|---|---|
| हे ज्ञान | हे ज्ञाने | हे ज्ञानानि | सं. |

एवं जलम्, फलम्, दुःखम्, धनम्, मित्रं, कलत्रं, गृहं सुखं इत्यादयः

इकारांतो नपुंसकलिंगो दधिशब्दः

| | | | |
|---|---|---|---|
| दधि | दधिनी | दधीनि | प्र. |
| दधि | दधिनी | दधीनि | द्वि. |
| दध्ना | दधिभ्याम् | दधिभिः | तृ. |
| दध्ने | दधिभ्याम् | दधिभ्यः | च. |
| दध्नः | दधिभ्याम् | दधिभ्यः | पं |
| दध्नः | दध्नोः | दध्नाम् | ष. |
| दध्नि-दधनि | दध्नोः | दधिषु | स. |
| हे दधे-दधि | हे दधिनी | हे दधीनि | सं. |

एवं अस्थि, सक्थि, अक्षि इत्यादयः

सकारांतो नपुंसकलिंगः पयस्शब्दः

| | | | |
|---|---|---|---|
| पयः | पयसी | पयांसि | प्र. |
| पयः | पयसी | पयांसि | द्वि. |
| हे पयः | हे पयसी | हे पयांसि | |

शेषं चंद्रमस्शब्दवत्

एवं मनस्, वचस्, सुचन्द्रमस् छन्दस् तपस् तमस् तेजस् नभस् इत्यादयः

नकारांतो नपुंसकलिंगो वर्मन्शब्दः

| | | | |
|---|---|---|---|
| वर्म | वर्मणी | वर्माणि | प्र. |
| वर्म | वर्मणी | वर्माणि | द्वि. |

शेषं आत्मन्शब्दवत्

| | | | |
|---|---|---|---|
| हे वर्मन्-हे वर्म | हे वर्मणी | हे वर्माणि | सं. |

एवं ब्रह्मन, शर्मन्, कर्मन् इत्यादयः

सकारांतो नपुंसकलिंगो धनुष्शब्दः

| | | | |
|---|---|---|---|
| धनुः | धनुषी | धनूंषि | प्र. |

| | | | |
|---|---|---|---|
| धनुः | धनुषी | धनूंषी | द्वि. |
| धनुषा | धनुर्भ्याम् | धनुर्भिः | तृ. |
| धनुषे | धनुर्भ्याम् | धनुर्भ्यः | च. |
| धनुषः | धनुर्भ्याम् | धनुर्भ्यः | पं. |
| धनुषः | धनुषोः | धनुषाम् | प. |
| धनुषि | धनुषोः | धनुष्षु | स. |
| हे धनुः | हे धनुषी | हे धनूंषि | सं. |

एवं चक्षुष् आयुष हविष् इत्यादयः

इकारांतो नपुंसकलिंगो वारिशब्दः

| | | | |
|---|---|---|---|
| वारि | वारिणी | वारीणि | प्र. |
| वारि | वारिणी | वारीणि | द्वि. |
| वारिणा | वारिभ्याम् | वारिभिः | तृ. |
| वारिणे | वारिभ्याम् | वारिभ्यः | च. |
| वारिणः | वारिभ्याम् | वारिभ्यः | पं. |
| वारिणः | वारिणोः | वारीणाम् | ष. |
| वारिणि | वारिणोः | वारिषु | स. |
| हे वारे-वारि | हे वारिणी | हे वारीणि | सं. |

एवं सुरभि, सुमुनि, इत्यादयः

तकारांतो नपुंसकलिंगो जगत्शब्दः

| | | | |
|---|---|---|---|
| जगत् | जगती | जगन्ति | प्र. |
| जगत् | जगती | जगन्ति | द्वि. |

शेषं भूभृत्शब्दवत्

| | | | |
|---|---|---|---|
| हे जगत् | हे जगती | हे जगन्ति | सं. |

एवं वियत् इत्यादयः

उकारांतो नपुंसकलिंगो मधुशब्दः

| | | | |
|---|---|---|---|
| मधु | मधुनी | मधूनि | प्र |

शेषं वारिशब्दवत्

वसु, तालु, वस्तु, अश्रु, इत्यादयः

नकारांतो नपुंसकलिंगो नामन्शब्दः

| | | | |
|---|---|---|---|
| नाम | नाम्नी-नामनी | नामानि | प्र. |
| नाम | नाम्नी-नामनी | नामानि | द्वि. |
| नाम्ना | नामभ्याम् | नामभिः | तृ. |
| नाम्ने | नामभ्याम् | नामभ्यः | च. |
| नाम्नः | नामभ्याम् | नामभ्यः | पं. |
| नाम्नः | नाम्नोः | नाम्नाम् | ष. |
| नाम्नि-नामनि | नाम्नोः | नामसु | स. |
| हे नामन् | हे नाम्नी | हे नामानि | स. |
| हे नाम | हे नामनी | | |

एवं लोमन्, सामन्, व्योमन्, धामन्, हेमन्, प्रेमन् इत्यादयः

इन्नंतो नपुंसकलिंगो मनोहारिन्शब्दः

| | | | |
|---|---|---|---|
| मनोहारि | मनोहारिणी | मनोहारीणि | प्र. |
| मनोहारि | मनोहारिणी | मनोहारीणि | द्वि. |

शेषं करिन् शब्दवत् सं. प्रथमावत्

एवं अपराधिन् कुशलिन् धनिन्, इत्यादयः

इति नपुंसकशब्दाः

सः सा तद्यश्च या यच्च कः का किं त्वमहं त्वयम्
इयं चेदं चैष चैषा चैतच्चासावसावदः ॥४॥

दकारान्तः पुंल्लिंगस्तद्शब्दः

| ए० | द्वि० | ब० | वि० |
|---|---|---|---|
| सः | तौ | ते | प्र. |
| तम् | तौ | तान् | द्वि. |
| तेन | ताभ्याम् | तैः | तृ. |
| तस्मै | ताभ्याम् | तेभ्यः | च. |
| तस्मात् | ताभ्याम् | तेभ्यः | पं. |
| तस्य | तयोः | तेषाम् | ष. |
| तस्मिन् | तयोः | तेषु | स. |

### दकारांतः स्त्रीलिंगस्तद्शब्दः

| | | | |
|---|---|---|---|
| सा | ते | ताः | प्र. |
| ताम् | ते | ताः | द्वि. |
| तया | ताभ्याम् | ताभिः | तृ. |
| तस्यै | ताभ्याम् | ताभ्यः | च. |
| तस्याः | ताभ्याम् | ताभ्यः | पं. |
| तस्याः | तयोः | तासाम् | ष. |
| तस्याम् | तयोः | तासु | स. |

### दकारान्तो नपुंसकलिंगस्तद्शब्दः

| | | | |
|---|---|---|---|
| तत् | ते | तानि | प्र. |
| तत् | ते | तानि | द्वि. |

शेषं पुल्लिंगतद्शब्दवत्

### दकारांतः पुल्लिंगो यद्शब्दः

| | | | |
|---|---|---|---|
| यः | यौ | ये | प्र. |

शेषं पुल्लिंगतद्शब्दवत्

### दकारांतः स्त्रीलिंगो यद्शब्दः

| | | | |
|---|---|---|---|
| या | ये | याः | प्र. |

शेषं स्त्रीलिंगतद्शब्दवत्

### दकारांतो नपुंसकलिंगो यद्शब्द

| | | | |
|---|---|---|---|
| यत् | ये | यानि | प्र. |
| यत् | ये | यानि | द्वि. |

शेषं पुल्लिंगतत्शब्दवत

### मकारांतः पुल्लिंगः किम्शब्दः

| | | | |
|---|---|---|---|
| कः | कौ | के | प्र. |

शेषं पुल्लिंगतद्शब्दवत्

### मकारांतः स्त्रीलिंगः किम्शब्दः

| | | | |
|---|---|---|---|
| का | के | काः | प्र. |

शेष स्त्रीलिंगतद्शब्दवत्

### मकारांतो नपुंसकलिंगः किम्शब्दः

| | | | |
|---|---|---|---|
| किम् | के | कानि | प्र. |
| किम् | के | कानि | द्वि. |

शेषं पुंवत्

### त्रिष्वपि लिंगेषु समानो दकारांतो युष्मद्शब्दः

| | | | |
|---|---|---|---|
| त्वम् | युवाम् | यूयम् | प्र. |
| त्वाम्–त्वा | युवां–वाम् | युष्मान्–वः | द्वि. |
| त्वया | युवाभ्याम् | युष्माभिः | तृ. |
| तुभ्यं–ते | युवाभ्याम्–वाम् | युष्मभ्यं–वः | च. |
| त्वद् | युवाभ्याम्– | युष्मत् | पं. |
| तव–ते | युवयोः–वाम् | युष्माकम्–वः | ष. |
| त्वयि | युवयोः | युष्मासु | स. |

### त्रिषु लिंगेषु सरूपो दकारांतोऽस्मद्शब्दः

| | | | |
|---|---|---|---|
| अहम् | आवाम् | वयम् | प्र. |
| मां–मा | आवां–नौ | अस्मान्–नः | द्वि. |
| मया | आवाभ्याम् | अस्माभिः | तृ. |
| मह्यं–मे | आवाभ्याम्–नौ | अस्मभ्यं–नः | च. |
| मत् | आवाभ्याम् | अस्मत् | पं. |
| मम–मे | आवयोः–नौ | अस्माकम्–नः | ष. |
| मयि | आवयोः | अस्मासु | स. |

### मकारांतः पुल्लिंग इदम्शब्दः

| | | | |
|---|---|---|---|
| अयम् | इमौ | इमे | प्र. |
| इमं–एनम् | इमौ–एनौ | इमान्–एनान् | द्वि. |
| अनेन–एनेन | आभ्याम् | एभिः | तृ. |
| अस्मै | आभ्याम् | एभ्यः | च. |
| अस्मात् | आभ्याम् | एभ्यः | प. |

| | | | |
|---|---|---|---|
| अस्य | अनयोः—एनयोः | एषाम् | ष. |
| अस्मिन् | अनयोः—एनयोः | एषु | स. |

मकारांतः स्त्रीलिंग इदम्शब्दः

| | | | |
|---|---|---|---|
| इयम् | इमे | इमाः | प्र. |
| इमां-एनाम् | इमे-एने | इमाः-एनाः | द्वि. |
| अनया-एनया | आभ्याम् | आभिः | तृ. |
| अस्यै | आभ्याम् | आभ्यः | च. |
| अस्याः | आभ्याम् | आभ्यः | पं. |
| अस्याः | अनयोः—एनयोः | आसाम् | ष. |
| अस्याम् | अनयोः एनयोः | आसु | स. |

मकारांतो नपुंसकलिंग इदम्शब्दः

| | | | |
|---|---|---|---|
| इदम् | इमे | इमानि | प्र. |
| इदं-एनत् | इमे-एने | इमानि-एनानि | द्वि. |

शेषं पुंवत्

दकारांतः पुल्लिंग एतद्शब्दः

| | | | |
|---|---|---|---|
| एषः | एतौ | एते | प्र. |
| एतं-एनम् | एतौ-एनौ | एतान्-एतान् | द्वि. |
| एतेन-एनेन | एताभ्याम् | एतैः | तृ. |
| एतस्मै | एताभ्याम् | एतेभ्यः | च. |
| एतस्मात् | एताभ्याम् | एतेभ्यः | पं. |
| एतस्य | एतयोः एनयोः | एतेषाम् | ष. |
| एतस्मिन् | एतयोः-एनयोः | एतेषु | स. |

दकारांतः स्त्रीलिंग एतद्शब्दः

| | | | |
|---|---|---|---|
| एषा | एते | एताः | प्र. |
| एताम्-एनाम् | एते-एने | एताः, एनाः | द्वि. |
| एतया-एनया | एताभ्याम् | एताभिः | तृ. |
| एतस्यै | एताभ्याम् | एताभ्यः | च. |
| एतस्याः | एताभ्याम् | एताभ्यः | पं. |
| एतस्याः | एतयोः-एनयोः | एतासाम् | ष. |
| एतस्याम् | एतयोः-एनयोः | एतासु | स. |

दकारांतो नपुंसकलिंग एतद्शब्दः

| | | | |
|---|---|---|---|
| एतत्-एनत् | एते-एने | एतानि-एनानि | प्र. |
| एतत्-एनत् | एते-एने | एतानि-एनानि | द्वि. |

शेषं पुंवत्

सकारांतः पुल्लिंगोऽदस्शब्दः

| | | | |
|---|---|---|---|
| असौ | अमू | अमी | प्र. |
| अमुम् | अमू | अमून् | द्वि. |
| अमुना | अमूभ्याम् | अमीभिः | तृ. |
| अमुष्मै | अमूभ्याम् | अमीभ्यः | च. |
| अमुष्मात् | अमूभ्याम् | अमीभ्यः | पं. |
| अमुष्य | अमुयोः | अमीषाम् | ष. |
| अमुष्मिन् | अमुयोः | अमीषुः | स. |

सकारांतः स्त्रीलिंगोऽदस्शब्दः

| | | | |
|---|---|---|---|
| असौ | अमू | अमूः | प्र. |
| अमूम् | अमू | अमूः | द्वि. |
| अमुया | अमूभ्याम् | अमूभिः | तृ. |
| अमुष्यै | अमूभ्याम् | अमूभ्यः | च. |
| अमुष्याः | अमूभ्याम् | अमूभ्यः | पं. |
| अमुष्याः | अमुयोः | अमूषाम् | ष. |
| अमुष्याम् | अमुयोः | अमूषु | स. |

सकारांतो नपुंसकलिंगोऽदस्शब्दः

| | | | |
|---|---|---|---|
| अदः | अमू | अमूनि | प्र. |
| अदः | अमू | अमूनि | द्वि. |

शेषं पुंवत्

गतामातास्त्रसागौर्नौः स्रग्भूराजा पतिः सखा
र्वःसर्वा च सर्वं च द्वित्र्यादिश्च गणस्तथा ॥

---

ऋकारांतः पुलिंगः पितृ–शब्दः ।

| | | | |
|---|---|---|---|
| पिता | पितरौ | पितरः | प्र. |
| पितरम् | पितरौ | पितॄन् | द्वि. |

पित्रा पितृभ्याम् इत्यादि अग्रे कर्तृव-ज्ज्ञेयम् । एवं भ्रातृ जामातृ–देष्टृ–शंस्तृ–सव्येष्टृ–नृ–इति षट् शब्दाः नृ–शब्दस्य षष्ठीबहुवचने तु नृणाम् नॄणाम् इति रूपद्वयम् । शेषं पितृवज्ज्ञेयम् ।

ऋकारान्तः स्त्रीलिंगो मातृशब्दः ।

| | | | |
|---|---|---|---|
| माता | मातरौ | मातरः | प्र. |
| मातरम् | मातरौ | मातॄः | द्वि. |

मात्रा मातृभ्याम् इत्यादि शेषं कर्तृवज्ज्ञेयम् । एवं यातृ-दुहितृ–ननान्दृ-ननन्दृ–इति चत्वारः शब्दाः ।

ऋकारान्तः स्त्रीलिंगः स्वसृशब्दः ।

| | | | |
|---|---|---|---|
| स्वसा | स्वसारौ | स्वसारः | प्र. |
| स्वसारम् | स्वसारौ | स्वसॄः | द्वि. |

स्वस्रा स्वसृभ्याम् इत्यादि शेषं कर्तृवज्ज्ञेयम् ।

४ ओकारन्त उभयलिंगो गो शब्दः ।

| | | | |
|---|---|---|---|
| गौः | गावौ | गावः | प्र. |
| गाम् | गावौ | गाः | द्वि. |
| गवा | गोभ्याम् | गोभिः | तृ. |
| गवे | गोभ्याम् | गोभ्यः | च. |
| गोः | गोभ्याम् | गोभ्यः | प. |
| गोः | गवोः | गवाम् | ष. |
| गवि | गवोः | गोषु | स. |
| हे गौः | हे गावौ | हे गावः | सं. |

एवम् ओकारान्तः स्त्रीलिंगो द्यो–शब्दः ।

औकारान्तः स्त्रीलिंगो नौ–शब्दः

| | | | |
|---|---|---|---|
| नौ | नावौ | नावः | प्रः |
| नावम् | नावौ | नावः | द्वि. |
| नावा | नौभ्याम् | नौभिः | तृ. |
| नावे | नौभ्याम् | नौभ्यः | च. |
| नावः | नौभ्याम् | नौभ्यः | पं. |
| नावः | नावोः | नावाम् | ष. |
| नावि | नावोः | नौषु | स. |
| हे नौः | हे नावौ | हे नावः | सं. |

एवं ग्लौशब्दः

६ जकारान्तः स्त्रीलिंगःस्रज् शब्दः

| | | | |
|---|---|---|---|
| स्रक् स्रग् | स्रजौ | स्रजः | प्र. |
| स्रजम् | ,, | ,, | द्वि. |
| स्रजा | स्रग्भ्याम् | स्रग्भिः | तृ. |
| स्रजे | ,, | स्रग्भ्यः | च. |
| स्रजः | ,, | ,, | पं. |
| ,, | स्रजोः | स्रजाम् | ष. |
| स्रजि | ,, | स्रक्षु | स. |
| हे स्रक् हे स्रग् | हे स्रजौ | हे स्रजः | सं. |

एवं ऋत्विज् सुयुज् इ.

ऊकारान्तः स्त्रीलिंगो भूशब्दः ।

| | | | |
|---|---|---|---|
| भूः | भुवौ | भुवः | प्र. |
| भुवम् | भुवौ | भुवः | द्वि. |
| भुवा | भूभ्याम् | भूभिः | तृ. |
| भुवै, भुवे | ,, | भूभ्यः | च. |

| | | | |
|---|---|---|---|
| भुवाः, भुवः | भूभ्याम् | भूभ्यः | पं. |
| ,, ,, | भुवोः | भूनाम् भुवाम् | ष. |
| भुवाम् भुवि | भुवोः | भूषु | स. |
| हे भूः | हे भुवौ | हे भुवः | सं. |

एवं सू–जू–भ्रू–सुभ्रू–इत्यादय ऊकारान्ताः स्त्रीलिङ्गाः

### नान्तः–पुल्लिंगो राजन् शब्दः।

| | | | |
|---|---|---|---|
| राजा | राजानौ | राजानः | प्र. |
| राजानम् | ,, | राज्ञः | द्वि. |
| राज्ञा | राजभ्याम् | राजभिः | तृ. |
| राज्ञे | ,, | राजभ्यः | च. |
| राज्ञः | ,, | ,, | पं. |
| राज्ञः | राज्ञोः | राज्ञाम् | ष. |
| राज्ञि, राजनि | ,, | राजसु | स. |
| हे राजन् | हे राजानौ | हे राजानः | सं. |

एवं महिमन् गरिमन् सुनामन् इ०

### इकारान्तः पुलिंगः पति–शब्दः

| | | | |
|---|---|---|---|
| पतिः | पती | पतयः | प्र. |
| पतिम् | पती | पतीन् | द्वि. |
| पत्या | पतिभ्याम् | पतिभिः | तृ. |
| पत्ये | ,, | पतिभ्यः | च. |
| पत्युः | ,, | ,, | पं. |
| पत्युः | पत्योः | पतीनाम् | ष. |
| पत्यौ | पत्योः | पतिषु | स. |
| हे पते | हे पती | हे पतयः | सं. |

### १० इकारान्तः पुलिंगः सखि–शब्दः।

| | | | |
|---|---|---|---|
| सखा | सखायौ | सखायः | प्र. |
| हे सखे | हे सखायौ | हे सखायः | सं. |
| सखायम् | सखायौ | सखीन् | द्वि. |
| सख्या | सखिभ्याम् | सखिभिः | |

इत्यादि अग्रे पतिशब्दवज्ज्ञेयम्।

---

## अथ सर्वादयः शब्दाः।

### अकारान्तः पुलिंगः सर्वशब्दः

| | | | |
|---|---|---|---|
| सर्वः | सर्वौ | सर्वे | प्र. |
| सर्वम् | ,, | सर्वान् | द्वि. |
| सर्वेण | सर्वाभ्याम् | सर्वैः | तृ. |
| सर्वस्मै | ,, | सर्वेभ्यः | च. |
| सर्वस्मात् | ,, | ,, | पं. |
| सर्वस्य | सर्वयोः | सर्वेषाम् | ष. |
| सर्वस्मिन् | सर्वयोः | सर्वेषु | स. |
| हे सर्व | हे सर्वौ | हे सर्वे | सं. |

### आबन्तः स्त्रीलिंगः सर्वाशब्दः।

| | | | |
|---|---|---|---|
| सर्वा | सर्वे | सर्वाः | प्र. |
| सर्वाम् | सर्वे | सर्वाः | द्वि. |
| सर्वया | सर्वाभ्याम् | सर्वाभिः | तृ. |
| सर्वस्यै | ,, | सर्वाभ्यः | च. |
| सर्वस्याः | ,, | ,, | पं. |
| सर्वस्याः | सर्वयोः | सर्वासाम् | ष. |
| सर्वस्याम् | ,, | सर्वासु | स. |
| हे सर्वे | हे सर्वे | हे सर्वाः | सं. |

### अकारान्तो नपुंसकलिंगः सर्वशब्दः।

| | | | |
|---|---|---|---|
| सर्वम् | सर्वे | सर्वाणि | प्र. |
| ,, | ,, | ,, | द्वि. |

शेषं पुंवज्ज्ञेयम्॥

एवं विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिमशब्दाः ॥

अकारांतः सर्वनामसंज्ञक एकशब्द एकवचनान्तः । पुंसि एकः १ एकम् २ एकेन ३ । एकस्मै ४ । एकस्मात् ५ । एकस्य ६ । एकस्मिन् ७ । स्त्रियाम् । एका १ एकाम् २ । एकया ३ । एकस्यै ४ । एकस्याः ५–६ । एकस्याम् ७ नपुंसके एकम् । एकम् । शेषम्पुंवत्

इकारान्तः सर्वनामसंज्ञको द्विशब्दः ।

| पुंसि | नपुंसके | स्त्रियाम् | द्विवचनान्तः |
|---|---|---|---|
| द्वौ | द्वे | द्वे | प्र. द्वि. |
| | द्वाभ्याम् | तृतीया | च. पं. |
| | द्वयोः | षष्ठी | सप्तमी |

त्रिशब्दः ( बहुवचनान्तः )

| पुंसि | नपुंसके | स्त्रियाम् | |
|---|---|---|---|
| त्रयः | त्रीणि | तिस्रः | प्र. |
| त्रीन् | त्रीणि | तिस्रः | द्वि |
| त्रिभिः | ,, | तिसृभिः | तृ. |
| त्रिभ्यः | ,, | तिसृभ्यः | च–पं. |
| त्रयाणाम् | ,, | तिसृणाम् | प. |
| त्रिषु | ,, | तिसृषु | स. |

चतुर् शब्दः ।

| पुंसि | नपुंसके | स्त्रियाम् | |
|---|---|---|---|
| चत्वारः | चत्वारि | चतस्रः | प्र. |
| चतुरः | चत्वारि | ,, | द्वि. |
| चतुर्भिः | ,, | चतसृभिः | तृ. |
| चतुर्भ्यः | ,, | चतसृभ्यः | च-पं. |
| चतुर्णाम् | ,, | चतसृणाम् | ष. |
| चतुर्षु | ,, | चतसृषु | स. |

त्रिषु लिंगेषु समाः ।

| | | | |
|---|---|---|---|
| पञ्चन् | षष् | अष्टन् | श. |
| पञ्च | षट् | अष्टौ, | प्र. द्वि. |
| पञ्चभिः | षड्भि | अष्टाभिः–अष्टभिः | तृ. |
| पञ्चभ्यः | षड्भ्यः | अष्टाभ्यः-अष्टभ्यः | च.पं. |
| पञ्चानाम् | षण्णाम् | अष्टानाम् | ष. |
| पञ्चसु | षट्सु षट्त्सु | अष्टासु-अष्टसु | स. |

सप्तन् नवन् दशन् इत्यादयः पञ्चन् शब्दवज्ज्ञेयाः । विंशतिशब्दः स्त्रीलिङ्गो रुचिशब्दवज्ज्ञेयः ।

एवं षष्टि-सप्तति अशीति-नवति इत्यादयः । त्रिंशत्शब्दः स्त्रीलिङ्गः सरित्शब्दवज्ज्ञेयः ।

एवं चत्वारिंशत्, पञ्चाशत् इत्यादयः ।

शत–सहस्र–अयुत–लक्ष–प्रयुते एते नपुंसकज्ञानशब्दवज्ज्ञेयाः । कोटि-शब्दः स्त्रियां रुचिवज्ज्ञेयः ।

उभौ प्रथमा । उभौ द्वितीया । उभाभ्याम् तृतीया । उभाभ्याम् चतुर्थी । उभाभ्याम् पंचमी । उभयोः षष्ठी । उभयोः सप्तमी । हे उभौ संबोधनम् ।

---

## पूर्वादीनां तु विशेषः ।

अकारांतः पुलिंगः पूर्वशब्दः

| | | | |
|---|---|---|---|
| पूर्वः | पूर्वौ | पूर्वे-पूर्वाः | प्र. |
| पूर्वम् | पूर्वौ | पूर्वान् | द्वि. |
| पूर्वेण | पूर्वाभ्याम् | पूर्वैः | तृ |
| पूर्वस्मै | पूर्वाभ्याम् | पूर्वेभ्यः | च. |
| पूर्वस्मात्-पूर्वात् | ,, | ,, | पं. |
| पूर्वस्य | पूर्वयोः | पूर्वषाम् | प. |
| पूर्वस्मिन्-पूर्वे | पूर्वयोः | पूर्वेषु | स. |
| हे पूर्व | हे पूर्वौ | हे पूर्वे हे पूर्वाः | सं. |

एवं पर, अवर, दक्षिण, अपर, अधर, स्व, अंतर, इति ।

अकारांतः पुल्लिंगो निर्जरशब्दः ।

| | | | |
|---|---|---|---|
| निर्जरः | निर्जरसौ / निर्जरौ | निर्जरसः / निर्जराः | प्र. |
| निर्जरसम् / निर्जरम् | निर्जरसौ / निर्जरौ | निर्जरसः / निर्जरान् | द्वि. |
| निर्जरसा / निर्जरेण | निर्जराभ्याम् | निर्जरैः / निर्जरसैः | तृ. |
| निर्जरसे / निर्जराय | निर्जराभ्याम् | निर्जरेभ्यः | च. |
| निर्जरसः / निर्जरात् | निर्जराभ्याम् | निर्जरेभ्यः | पं. |
| निर्जरसः / निर्जरस्य | निर्जरसोः / निर्जरयोः | निर्जरसाम् / निर्जराणाम् | ष. |
| निर्जरसि / निर्जरे | निर्जरसोः / निर्जरयोः | निर्जरेषु | स. |
| हे निर्जर | हे निर्जरसौ / निर्जरौ | हे निर्जरसः / निर्जराः | सं. |

पकारान्तः स्त्रीलिङ्गोऽपशब्दस्तु बहुवचनान्तः

आपः १ अपः २ अद्भिः ३ अद्भ्यः ४ अद्भ्यः ५ अपाम् ६ अप्सु ७ ।

## सात विभक्तिना अर्थ.

प्रथमा—जे, ते,
द्वितीया—ने, प्रत्ये,
तृतीया—ए, वडे, करीने
चतुर्थी—ने माटे लीधे, वास्ते, सारु
पंचमी—थी, थकी, उपरथी,
षष्ठी—नो, नी, नुं, नां,
सप्तमी -मां, विषे, अंदर, उपर,
संबोधन—हे,

इति बालसंस्कृतदीपिकायां शब्दरूपावलिः



# ॥ शिशुबोधिनी ॥

प्रणम्य श्रीमहावीरं गौतमं लब्धिसम्पदम् ।
सद्गुरुं नेमिसूरिं च तन्यते शिशुबोधिनी ॥ १ ॥

## ॥ अथ संज्ञाप्रकरणम् ॥

१ अ थी औ सुधीना वर्णों स्वर कहेवाय (अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ( १४)

२ क थी ह सुधीना वर्णों व्यंजन कहेवाय (क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह (३३)

३ अ थी ॡ सुधीना स्वरो समान कहेवाय (१०)

४ अ अने आ सिवायना बाकीना स्वरो नामी कहेवाय (१२)

५ ए ऐ ओ औ ए चार सन्ध्यक्षर छे,

६ क वर्ग च वर्ग ट वर्ग त वर्ग प वर्ग ए पांच वर्ग छे,

७ ङ ञ ण न म ए पांच अनुनासिक छे.

८ य र ल व ए चार अन्तःस्था छे,

९ अनुनासिक अने अन्तःस्था सिवाय बाकीना व्यंजनो धुट् कहेवाय,

१० दरेक वर्गनो पहेलो बीजो अने श ष स ए अघोष कहेवाय (१३)

११ अघोष सिवाय बाकीना व्यंजनो घोष कहेवाय (२०)

१२ जेने छेडे विभक्ति होय ते पद कहेवाय जेमके जिनः । मुनिः ।

॥ इति संज्ञाप्रकरणम् ॥

## ॥ अथ स्वरसन्धिः ॥

१ छेल्ला चार स्वरो ( ए ऐ ओ औ ) सिवाय बाकीना कोइपण ह्रस्व अथवा दीर्घ स्वर पछी स्वजातीय स्वर ह्रस्व के दीर्घ आवे तो पासे आवेला बे स्वरो मळी जइ बंनेने ठेकाणे दीर्घस्वर थाय छे. वृषभ–अजितौ वृषभा-

जितौ, दधि इदम्–दधीदम्, भानु उदयः–भानूदयः, पितृ ऋषभः पितॄषभः, होत्लृ लृकारः होतॄकारः,

२ अ के आ पछी ह्रस्व के दीर्घ इ उ ऋ के लृ आव्यो होय तो पासे आवेला बे स्वरने बदले अनुक्रमे ए ओ अर् अल् मूकाय छे. जेमके तव इदम्–तवेदम्, तव उदय–तवोदय, जिन ऋषभ–जिनर्षभः, तव लृकारः– तवल्कारः ॥

३ ह्रस्व के दीर्घ इ उ ऋ अने लृ पछी विजातीय (जुदी जातना) स्वर आवे तो ते इ, उ, ऋ, ने लृने ठेकाणे अनुक्रमे य, व, र ने ल, मुकाय छे. दधि आनय=दध्यानय, मधु आनय मध्वानय, पितृ अर्थः पित्रर्थः होतृ अकारः होत्लकारः,

४ अ के आ पछी ए के ऐ आवे तो बेउने ठेकाणे ऐ थाय अने ओ के औ आवे तो औ थाय छे. जेमके तव=ओदनः तवौदनः, तव=औपगवः तवौपगवः ॥

५ ए ऐ ओ के औ पछी कोइ पण स्वर आवे तो तेने बदले अनुक्रमे अय्, आय्, अव्, के आव्, मुकवामां आवे छे. ने अनम् नयनम्, नै अकः–नायकः, भो अनम्–भवनम् लौ अकः–लावकः

६ पदने छेडे अय् आय् अव् के आव् होय अने पछी कोइपण स्वर होय तो अय् आय् ना जे य् अने अव् आव् नो जे व् ते विकल्पे उडी जाय अने पछी संधि न थाय जेमके ते–इह–त–इह । तयिह । तस्मै–एतत् तस्मा–एतत् । तस्मायेतत् पटो–इह–पट–इह । पटविह । तौ–इह ता इह–ताविह ।

७ पदने छेडे ए के ओ होय अने पछी जो अ आवे तो ते अ उडी जाय जेमके रामे–अत्र । रामेऽत्र ॥ भानो–अत्र । भानोऽत्र ।

८ छेल्ला चार स्वर (ए ऐ ओ औ) सिवाय बीजा कोइ पण स्वर पछी ह्रस्व ऋ आवे तो सन्धि करवी अथवा तो सन्धि न करता पूर्वनो स्वर दीर्घ होय तो ह्रस्व करवो. महिषी ऋर्षि=महिषि ऋषिं,

॥ इति स्वरसन्धिः ॥



॥ अथासन्धिः ॥

१ द्विवचनान्त शब्दने छेडे ई ऊ के ए होय अने पछी कोइ पण स्वर आवे

तो संधि न थाय जेमके मुनी–एतौ । साधू आगच्छतः । माले इमे ॥

२ अदुस शब्दना अमी पछी को इपण स्वर आवे तो संधि न थाय जेमके अ-मी अश्वाः ।

॥ इत्यसन्धिः ॥

॥ अथ व्यञ्जनसन्धिः ॥

१ पदने छेडे वर्गनो पहेलो होय अने पछी स्वर के घोष व्यंजन आवे तो पहेलाने ठेकाणे ते वर्गनो त्रीजो थाय, जेमके–भूभृत्–अयम् । भूभृदयम् ।

२ पदने छेडे वर्गनो त्रीजो होय अने पछी अनुनासिक आवे तो त्रीजाने ठेकाणे ते वर्गनो पांचमो विकल्पे थाय, जेमके ककुम्मण्डलम् । ककुब्मण्डलम् ॥

३ पदने छेडे वर्गनो त्रीजो होय अने पछी ह आवे तो ह ने ठेकाणे जे वर्गनो त्रीजो होय ते वर्गनो चोथो थाय केमके वाक् हीनः–वाग् हीनः । वाग्घीनः ।

४ श ष स सिवायनो जे धुट् तेना पछी जो अघोष आवे तो धुट् ने ठेकाणे ते वर्गनो पहेलो थाय जेमके भेद्–ता । भेत्ता ।

५ पदने छेडे वर्गनो पहेलो होय, अने पछी श होय अने श पछी धुट् सिवायनो कोइपण व्यंजन के स्वर होय तो श ने ठेकाणे विकल्पे छ थाय, जेमके वाक् शूरः । वाक्छूरः ।

६ पदने छेडे न् होय अने पछी च छ ट ठ के त थ आवे अने तेना पछी जो कोइपण धुट् वर्ण न होय तो न् ने ठेकाणे अनुक्रमे श ष स थाय अने न् नी पहेलाना वर्ण उपर अनुस्वार अथवा अनुनासिक थाय जेमके भवान्–चर । भवांश्चरः । भवाँश्चरः । भवान्–छ्यति भवांश्छ्यति । । भवाँश्छ्यति भवान्-टकः । भवांष्टकः । भवाँष्टकः । भवान-ठकारः । भवांष्ठकारः । भवाँष्ठकारः ॥ भवान्–तनोति । भवांस्तनोति । भवाँस्तनोति ॥ भवान्–थुडति । भवांस्थुडति । भवाँस्थुडति ॥ आ नियम प्रशान् शब्दना न् ने ठेकाणे लागतो नथी जेमके प्रशान् तनोति ॥

७ पदने छेडे न होय अने पछी श आवे तो न पछी च् विकल्पे उमेराय छे अने तेनो विकल्पे लोप थाय छे जेमके भवान्–शूरः । भवाञ्छूरः । भवाञ्च्–शूरः । भवाञ्छूरः । भवाञ्शूरः ।

८ त वर्गने ठेकाणे श के च वर्गनो योग छतां च वर्ग थाय, जेमके-तत् शेते। । तच्-शेते । तच्छेते । तत्-चारु । तच्चारु ।

९ त वर्गने ठेकाणे ष के ट वर्गनो योग छतां ट वर्ग थाय, जेमके-पेष्-ता । पेष्टा । तत्-टीका । तट्टीका ।

१० स् ने ठेकाणे श के च वर्गनो योग छतां श् थाय अने ष के ट वर्गनो योग छतां ष थाय, जेमके-कस् शूरः-कश्शूरः । कस् चरति-कश्चरति । कस् पष्ठः-कष्षष्ठः । कस् टङ्कः-कष्टङ्कः ।

११ श पछी जो तवर्ग आवे तो तवर्गनो चवर्ग थतो नथी. जेमके-प्रश्नः ।

१२ तवर्ग पछी ष आवे तो तवर्गनो टवर्ग थतो नथी, जेमके-तीर्थकृन् षोडशः शान्तिः

१३ तवर्ग पछी जो ल आवे तो तवर्गने ठेकाणे ल थाय अने न् ने ठेकाणे अनुनासिक लँ थाय जेमके-तत् लुनानि-तल्लुनाति । भवान् लिखति-भवाँल्लिखति

१४ ह्रस्व पछी पदने छेडे ङ् ण् न् होय अने पछी कोइ पण स्वर आवे तो ङ् ण् न् बेवडाइ जाय जेमके क्रुङ् इह-क्रुङ्ङिह । सुगण् इह-सुगण्णिह । कुर्वन् आस्ते-कुर्वन्नास्ते ।

१५ पदने छेडे म् होय अने पछी कोइ पण व्यंजन आवे तो म् ने ठेकाणे अनुस्वार थाय अथवा म् पछीनो व्यंजन जे वर्गनो होय ते वर्गनो अनुनासिक थाय. जेमके त्वम्-करोषि-त्वं करोषि-त्वङ्करोषि ॥

१६ समान पदे ( एकने एकज शब्दमां) ऋ र् के ष् पछी लागलोज न आव्यो होय तो ते न नो ण थाय छे, वळी ऋ र, ष्, अने न नी वच्चे स्वर ह शिवाय अर्धस्वर महाप्राण ह तेमज कंठ्य के ओठ्य वर्गने व्यंजन होय तो पण न नो ण थाय छे परंतु जो पदान्ते आव्यो होय तो ते न् नो ण थतो नथी, नरान्, नृपेण, हरिणा, ऋषिणा,

१७ स्वर पछी छ् आवे तो च्छ थाय छे ते स्वर दीर्घ अने पदान्ते होय तो च्छ् विकल्पे थाय छे, पण मा (नहि) अने आ (उपसर्ग) पछी छ नो च्छ अवश्य थाय छे. वृक्ष छाया-वृक्षच्छाया. आच्छिद्यते. नदी छाया-नदीच्छाया-नदीछाया,

॥ इति व्यञ्जनसन्धिः ॥

---

॥ अथ रेफसन्धिः ॥

